## वावाप्योस्तनिक्रीधाग्नहोर्वपी ॥ ३ । २ । १५६ ॥

अवशब्दस्योपसर्गस्य तनिक्रीणात्योः परयोरपिशब्दस्य च धाग्नहोः परयोर्यथासंख्यं व पि इत्येतावादेशौ वा भवतः ।

* वतंसः, अवतंसः; वक्रयः, अवक्रयः; पिहितम्, अपिहितम्; पिधानम्, अपिधानम्; पिदधाति, अपिदधाति, पिनद्धम्, अपिनद्धम् ।

धातुनियम नेच्छन्त्येके । पृषोदरादिप्रपञ्च एषः, तेन शिष्टप्रयोगोऽनुसरणीयः ॥ १५६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचितायां श्रीसिद्धिहेमचन्द्राभिधानस्वोपज्ञशब्दानुशासन बृहद्वृत्तौ ( तत्त्वप्रकाशिकाया ) तृतीयस्याध्यायस्य द्वितीय. पाद. समाप्तः ॥३।२॥

श्रीमद्वल्लभराजस्य प्रतापः कोऽपि दुःसहः ।
प्रसरन् वैरिभूपेषु दीर्घनिद्रामकल्पयत् ॥ ३ । २ । २ ॥

## ॥ समाप्तोऽयं तृतीयस्याध्यायस्य द्वितीयः पादः,–

तत्परिसमाप्तौ समाप्तोऽयं चतुष्कवृत्तिस्वरूपः ( सन्धि-नाम-कारक-समासा-श्चत्वारो मानमस्येति चतुष्कश्चतुर्णां समुदायः ) प्रथमो विभागः ॥

अथवा—श्रीसिद्धहेमचन्द्रशब्दानुशासनम् तस्याऽयं ( श्री हेमचन्द्र ग्रन्थाब्धौ तृतीय-ग्रन्थरत्नस्वरूपोऽयं ) द्वितीयो विभागः ॥



| अशुद्धम् | शुद्धम् | पत्राङ्कम् | पङ्क्ति |
|---|---|---|---|
| °मत, | °मते, | १८१ | २ |
| °त्यादपि | °त्याद्यपि | १८१ | २ |
| °स्येति-म° | °स्येति घा म° | १८१ | २३ |
| खंड् न | खड्ग्न | १८२ | २३ |
| क्रपी° | कृपी° | १८३ | ८ |
| मरी° | मारी° | १८८ | २७ |

| अशुद्धम् | शुद्धम् | पत्राङ्कम् | पङ्क्ति |
|---|---|---|---|
| °न्ता द्वि° | °न्ताद्वि° | १८८ | २९ |
| °ब्द उ° | °ब्दे उ° | १८८ | ३४ |
| °तेक्त° | °तक्त° | १८८ | ३७ |
| मन्त° | अन्त° | १८९ | ४ |
| विष्वग्व्यमश्चति | XXXXXX | १८९ | ३२ |
| °पदे का | °पदे परे का | १८९ | ३२ |

# शुद्धिपत्रकम् ।

| अशुद्धम् | शुद्धम् | पत्राङ्कम् | पङ्क्ति |
|---|---|---|---|
| नका° | सका° | ६ | ७ |
| °मिदा° | °भिधा° | ७ | १६ |
| चिग्द | चिग् | ९ | ४ |
| °कृत्वा | °कृत्व | ९ | २१ |
| खटैषा | खट्वैषा | १२ | ४ |
| °रूष | °रूप ? | १२ | ३६ |
| °भ्र ? ओ° | भ्रौ | १३ | ८ |
| भवति | भवन्ति | १३ | २४ |
| °त्या | °त्स्या | १७ | १८ |
| भो प्र° | भो प्र° | २० | ३० |
| घुटि | घुटि | २४ | २० |
| किम्, | किम् ? | २४ | ३२ |
| भव° | भव° | ३१ | २ |
| °र्थम् | °र्थम्, | ३२ | २१ |
| °तरम् | तरसम् | ४४ | २६ |
| चाक् | चाक | ४७ | १८ |
| °थ्य | थ्म | ४८ | १९ |
| °त्यर्थम् | °त्त्यर्थम् | ४९ | १७ |
| °क्षंते | °क्षते | ४९ | २७ |
| °मप्रा° | °मा° | ४९ | ३६ |
| °स° | °स्तै | ५१ | ३७ |
| भ्व° | ऋ्व° | ५५ | ११ |
| क्रुर्या° | कूर्या° | ५७ | २६ |
| स्वाः° | स्वन° | ५८ | ३ |
| वोद्दम् | वोद्धुम् | ६० | ५ |
| अति° | अदि | ६० | १३ |
| °यि द्व° | यिद्व | ६० | २३ |
| °रि षी° | °रिषी° | ६० | २४ |
| °तका° | °टका° | ६२ | १४ |
| °ग्मी | ग्गमी | ६३ | ३ |
| उच्य° | उदच्य° | ६५ | १२ |
| भ्रौ° | भ्रौ | ६६ | १४ |
| भूपा ? | भूपा ? | ६७ | २४ |
| त्वेष, | त्वेषो | ६७ | २५ |
| °मेव° | मवे | ६८ | ३ |
| °वास्त | °वास्तु | ६८ | २४ |
| °दनाधिक-रणाधि° | °दनाधि° | ७९ | १५ |
| °नाद् | °नात् | ८६ | २६ |
| क्रष्ट° | कर्ष्ट | ८८ | ३८ |
| °कतृ° | कर्तृ° | ९० | १९ |
| °ब्यु° | व्यू° | ९१ | ३२ |
| पकार | षकार | ९६ | १० |
| °भत् | °भत | १०० | ३९ |
| °स्यानात् | °स्यात् | १०१ | ०७ |
| शरात् | शरत् | १०१ | ३१ |
| °षणो° | °पुणो° | १०४ | ३० |
| प्रणा° | प्रना° | १०७ | २५ |
| निलयनम् | निलयम् | १११ | ०३ |
| द्दूर° | दुर° | १११ | २३ |
| गिरो | गिरौ | १११ | ३३ |
| °पाच्छ° | °पादाच्छ° | ११३ | ३२ |
| °भ्री | °भीहे | ११३ | ३३ |
| °भिकर | °भिकार | ११६ | ८ |
| द्विगो | द्विगो | ११६ | ३३ |
| कथा° | यथा° | १२१ | २४ |
| इन्द्व | इन्द्व | १२३ | ७ |
| भी ति | भीमवति | १२३ | ३३ |
| °ल्या | °ल्यायनी | १२३ | ३४ |
| °मूह् | °मूह् | १२४ | २९ |
| °घन्धु | °बन्धू | १२८ | ११ |
| °काभावे | °कोभावे | १३० | ११ |
| °कारे | °कार | १३० | ३४ |
| प्रयु° | यु° | १३२ | २७ |
| घूत्क° | फुत्क° | १३३ | ४ |
| गुल्लु° | गल्लु° | १३३ | ११ |
| गुल्लू° | गल्लू° | १३३ | ११ |
| °ति | °तयो | १३६ | २२ |
| °ति | °तयो | १३६ | ०५ |
| °ति | °तयो | १३६ | २५ |
| °त ,-जी° | °त , तेन-जी° | १४५ | ३४ |
| °सुरा, | °सुरा, | १४७ | ११ |
| °गम्ना° | गम्य° | १५१ | २३ |
| भव° | व्यव° | १५१ | ३४ |
| रण । | रण । खल-वैयाकरण | १५३ | २६ |
| अपाकृत , | अपाकृत ,- अपकृत , | १५४ | २६ |
| °र्थे सा° | र्थे च सा° | १५५ | २५ |
| प्रियं | प्रिय | १५८ | २२ |
| °कर्णा | °कर्णौ | १५८ | ०७ |
| भ्रातृ° | मातृ | १६० | ६ |
| °भाज | °भाजो | १६३ | १० |
| सार° | पर° | १६३ | ११ |
| °लूपम् | °लपम् | १६४ | १९ |
| °रटा° | °रद्धा | १६५ | १७ |
| °सर° | °सार° | १६६ | ०८ |
| ११२।१५६॥ | ३।१।१५६॥ | १६६ | ०९ |
| ऋर्द्ध | ऋद्ध | १६९ | ३० |
| मिता | मित | १७० | ६ |
| वेद° | वेदे | १७४ | ३८ |
| °शक्तौ | °शक्तौ | १७५ | १ |
| °रोऽ° | °राऽ° | १७५ | ४ |
| °दस्या, | °देश्या, | १७८ | ०७ |
| वहृ° | वह° | १७८ | ४० |
| °गण | °र्गण | १७९ | ३३ |
| द्वी, | की, | १८० | ३८ |
| क्रियां | क्रिया | १८० | ४० |

॥ अर्हँ ॥

# परिशिष्टम् १

॥ आगमोद्धारकाचार्यश्रीमत्सागरानन्दसूरिगुरुभ्यो नमः ॥

श्रीअमरचन्द्रसूरिविरचितः स्यादिशब्ददीपिकया सहितः

# श्रीस्यादिशब्दसमुच्चयः ।

श्रीशारदां हृदि ध्यात्वा, स्यादिशब्दसमुच्चयम् ।
करोत्यमरचन्द्राऽऽख्यो, यतिः श्वेताम्बराग्रणीः ॥ १ ॥
शब्दाः पुँल्लिङ्गाः स्त्रीलिङ्गाः, स्युर्नपुंसकलिङ्गकाः ।
स्त्रीपुँल्लिङ्गकाः पुंक्लीब,-लिङ्गाः स्त्रीक्लीबलिङ्गकाः ॥ २ ॥
त्रिलिङ्गका अलिङ्गाश्च, वाच्यलिङ्गा अपि क्रमात् ।
नवप्रकारः शब्दानां, लिङ्गभेदो भवत्ययम् ॥ ३ ॥
स्वरान्ता व्यञ्जनान्ताश्च, सर्वनामगणोदिताः ।
सङ्ख्यासमाश्रिताः शब्दा, ज्ञेयाः प्रज्ञावता क्रमात् ॥ ४ ॥
अकारान्ताः स्मृताः पुंसि, देव मुख्याः समक्रियाः ।
मास-दन्त-पाद-यूषाः, शसादौ भेदभाजिनः ॥ ५ ॥

देवप्रक्रिया सुगमा, परं देवाः–इत्यत्र जसि अपवादत्वात् समानदीर्घबाधकस्य "लुगस्यादेत्यपदे" ॥ २ । १ । ११३ ॥ इत्यस्य बाधको "अत आः स्यादौ जस्भ्याम्ये" ॥ १ । ४ । १ ॥ इत्यनेन आकारः । मासादीनां विशेषो यथा–"मास-निशाऽऽसनस्य शसादौ लुग् वा" ॥ २ । १ । १०० ॥ इति मासान्, मासः । मासेन, मासा । मासाभ्याम्, मास-शब्दस्य भ्यामि अनेनान्तलोपे 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यकारस्य स्थानित्वेन "सो रुः" ॥ २ । १ । ७२ ॥ रुत्वाभावे "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ इति दत्वम् । अत्र तु न्यायस्य अनित्यत्वात् माद्भ्याम् इति मन्यते भाष्यकृत् । दुर्गस्तु मास्भ्याम् इति । सिद्धहेमव्याकरणे तु द्वयमपि भवति । एव सर्वत्र । सुपि मासेषु, "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ सत् मात्सु, "शिट्याद्यस्य द्वितीयो वा" ॥ १ । ३ । ५९ ॥ माथ्सु ॥ दन्तादिषु ३ "दन्तपाद०" ॥ २ । १ । १०१ ॥ इत्यादिसूत्रेण शसादौ दत्, पद्, यूषन् आदेशाः स्युः ॥ दन्तान्, दतः । दन्तेषु, दत्सु, दथ्सु ॥ पादान्, पदः । पादेषु, पत्सु, पथ्सु ॥ यूषान्, "अनोऽस्य" ॥ २ । १ । १०८ ॥ इत्यलोपे "रषृ०" ॥ २ । ३ । ६३ ॥ णत्वे च यूष्णः । यूषाभ्याम्, "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ नलोपे यूषभ्याम् । ङौ यूषे, "ईङौ वा" ॥ २ । १ । १०९ ॥ वा अलोपे यूष्णि, यूषणि इत्यादि ॥ ५ ॥

नपुंसके स्मृतास्तुल्य,– क्रियाः कुण्ड-कुलादयः ।
हृदयोदकाऽऽसनानां, शसादावन्तरं पुनः ॥ ६ ॥

"अतः स्यमोऽम्" ॥ १ । ४ । ५७ ॥ "औरीः" ॥ १ । ४ । ५६ ॥ "नपुंसकस्य शि." ॥ १ । ४ । ५५ ॥ "स्वराच्छौ" ॥ १ । ४ । ६५ ॥ "नि दीर्घ." ॥ १ । ४ । ८५ ॥ ५ सूत्राणि ॥ कुण्ड कुण्डे कुण्डानि २ । शेष देववत् ॥

"दन्तपाद०" ॥ २ । १ । १०१ ॥ इत्यादिना शसादौ हृदयस्य वा हृद् । उदकस्य वा उदन् । कुण्डवत् ५ रूपाणि ॥ शसि हृदयानि, पक्षे "धुटां प्राक्" ॥ १ । ४ । ६६ ॥ नोन्ते हृन्दि । हृदा हृद्भ्यामित्यादि ॥ "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ हृत्सु, हृथ्सु ॥ कुण्डवत् ५ रूपाणि । उदकानि, "नि दीर्घः" ॥ १ । ४ । ८५ ॥ उदानि । उदकेन, "अनोऽस्य" ॥ २ । १ । १०८ ॥ उद्ना । उदकाभ्याम्, उदभ्याम् । ङौ उदके, "ईङौ वा" ॥ २ । १ । १०९ ॥ उदनि उद्नि ॥ "मास निशा०"–॥ २ । १ । १०० ॥ इत्यादिना शसादौ आसनस्य अन्तलोपे आसन् । आसनानि, "नि दीर्घ." ॥ १ । ४ । ८५ ॥ आसानि । आसनेन, "अनोऽस्य" ॥ २ । १ । १०८ ॥ आस्ना ॥ आसनाभ्याम्, "स्वरस्य परे प्राग्विधौ" ॥ ७ । ४ । ११० ॥ इत्यकारस्य स्थानित्वात् नलोपाभावे आसन्भ्याम् ॥ ङौ आसने, आसनि, आस्नि ॥ ६ ॥

१ दन्त्य इत्यन्ये ।

**शुक्ल-कृष्णारुणाद्यास्तु, वाच्यलिङ्गाः प्रकीर्त्तिताः ।**
**आकारान्ताश्च पुलिङ्गा, हाहा-प्रभृतयः समाः ॥ ७ ॥**

शुक्लाद्याः पुंसि देववत् । स्त्रियामाप्प्रत्यये शालावत् । क्लीबे कुण्डवत् ।

हाहाऽऽदीनां स्वरे सन्धिः । अघुट्स्वरे तु "लुगातोऽनापः" ॥ २ । १ । १०७ ॥ इत्यन्तलोपः । हाहाः हाहौ हाहाः । हाहां हाहः । हाहा हाहाभ्याम्० । आ० हे हाहाः ! ॥ ७ ॥

**आकारान्ताः स्त्रियां श्रद्धा,-शाला-मालाऽऽदयः समाः ।**
**जरा-निशा-नासिकाऽम्बा,-ऽर्थानां स्यादन्तरं पुनः ॥ ८ ॥**

श्रद्धा सि "दीर्घङ्याब्व्यञ्जनात् सेः" ॥ १ । ४ । ४५ ॥ श्रद्धा । "औता" ॥ १ । ४ । २० ॥ श्रद्धे । श्रद्धाः । श्रद्धां श्रद्धाः । "टौस्येत्" ॥ १ । ४ । १९ ॥ श्रद्धया श्रद्धाभ्याम्० । "आपो ङिता यैयास् यास् याम्" ॥ १ । ४ । १७ ॥ श्रद्धायै० । श्रद्धयोः श्रद्धानाम् । आ० "एदापः" ॥ १ । ४ । ४२ ॥ हे श्रद्धे हे श्रद्धे हे श्रद्धाः।

जरादीनां विशेषो यथा—जरा "जराया जरस् वा" ॥ २ । १ । ३ ॥ स्वरादौ वा जरस् आदेशः ॥ विकल्पपक्षे व्यञ्जनादौ च श्रद्धावत् ॥ जरा । जरसौ, जरे । जरसः, जरा ॥ इत्यादि ॥ जरामतिक्रान्त इत्यन्यपदार्थे "गोश्चान्ते०" ॥ २ । ४ । ९६ ॥ इत्यादिसूत्रेण ह्रस्व. । ह्रस्वत्वे कृते 'एकदेशविकृतमनन्यवत्' इति न्यायात् जरसादेशः । पुलिङ्गे—अतिजरः अतिजरसौ, अतिजरौ अतिजरस., अतिजरा. । अतिजरसा अत्र परत्वात् नित्यत्वाच्च प्रागेव जरसादेशे कृतेऽदन्तत्वाभावः । अन्ये तु प्रागेवेनादेश 'सन्निपातलक्षण०' न्यायस्य अनित्यत्वाऽऽश्रयणात् पश्चात् जरसादेश चेच्छन्तोऽतिजरसिना इत्यपि मन्यन्ते । पक्षे अतिजरेण अतिजराभ्याम् एसादेशेनैव सिद्धे ऐस्करण 'सन्निपातलक्षण०' न्यायस्य अनित्यत्वज्ञापनार्थं तेन अतिजरसैः । अन्ये तु अतिजरैरित्येवेच्छन्ति । ऐस्करणादतिजरसैरेतत् ज्ञापकम् 'ज्ञापकज्ञापिता विधयो ह्यनित्याः' इति 'एकदेशविकृतमनन्यवत्' इति न्यायेन ऐस्करणे जराशब्द आकारान्तो न ज्ञेयः । तेनैव अतिजरैः । अतिजरसः, अतिजरात् । केचित् तु प्रागेवादादेशे जरसादेशमिच्छन्तोऽतिजरसादित्यपि, ङसिस्थानेऽदिति सिद्धे यद् दीर्घोच्चारण तेन अतिजरसादिति वा मन्यन्ते । क्लीबे सौ "अत. स्यमोऽम्" ॥ १ । ४ । ५७ ॥ अमोऽकारोच्चारण जरसादेशार्थम् । "जरसो वा" ॥ १ । ४ । ६० ॥ इति वा लुपि अतिजरः, अतिजरसम्, अतिजरम् । अतिजरसी, अतिजरे । अतिजरांसि, अतिजराणि । द्वितीयायामप्येवम् । शेष पुंवत् । स्त्रिया तु मुख्यजराशब्दवत् ॥ "मासनिशा०" २।१।१००॥ इत्यादिना शसादौ वा अन्तलुक् । निशः, निशा. । निशा, निशया । "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ इति शस्य जत्वे निज्भ्याम्, निशाभ्याम् । सुपि "सस्य शषौ" ॥ १ । ३ । ६१ ॥ इति सुप्सस्य शः "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ श ज "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ ज् च् "प्रथमादधुटि शश्छः" ॥ १ । ३ । ४ ॥ वा शु छु इति निच्छु, निच्शु, निशासु ॥ "दन्त-पाद-नासिका०" ॥ २ । १ । १०१ ॥ इत्यादिना शसादौ वा नस् । नसः, नासिकाः । नसा, नासिकया । "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ इति स् द् "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ द् त् नत्सु, नध्सु, नासिकासु ॥ अम्बाऽर्थानां तु "नित्यदिद्द्विस्वराम्बार्थस्य ह्रस्व." ॥ १ । ४ । ४३ ॥ हे अम्ब ! हे अम्बाः ! । एव अक्का अल्ला । बहुस्वरत्वात् ड-ल कवतां न स्यात् । हे अम्बाडे ! हे अम्बाले ! हे अम्बिके ! ॥ ८ ॥

**आकारान्ता वाच्यलिङ्गाः, सोमपा-प्रमुखाः समाः ।**
**पुंसि तुल्या इकारान्ता, अग्नि-विध्यादयो मताः ॥ ९ ॥**

सोमपा, कीलालपा, क्षीरपा, घर्मत्रा, शङ्खध्मा, लोहध्मा इत्यादि विजन्ताः । उदधिका, अग्रेगा, विकपा, गोपा, अब्जजा इत्याद्याकारान्ता एते धातुरूपा वाच्यलिङ्गाः । एषा घुटि परे सन्धि. अघुटि स्वरे तु "लुगातोऽनापः" ॥ २ । १ । १०७ ॥ आ लुग् । सोमपाः सोमपौ सोमपा. । सोमपः । सोमपा सोमपाभ्याम् । आ० हे सोमपा ! । स्त्रीलिङ्गेऽप्येवम् । आबन्तत्वाभावात् न श्रद्धासमत्वमेषाम् ॥ क्लीबे ह्रस्वत्वे कुण्डवत् ॥

**"अग्रेगा उदधिकाश्च, विकपाश्च तथा गोपा ।**
**श्रियं ददतु राजेन्द्र !, अब्जजा-सहिता इमे ॥ १ ॥"**

अग्रेगा इन्द्रः । उदधिका विष्णु. । विकपाः शम्भुः । गोपाः रविः । अब्जजा ब्रह्मा । इति सञ्ज्ञात्वेऽप्येते ॥

अग्नि "इदुतोऽस्त्रेरीदूत्" ॥ १ । ४ । २१ ॥ "जस्येदोत्" ॥ १ । ४ । २२ ॥ "टः पुंसि ना" ॥ १ । ४ । २४ ॥ "ङित्यदिति" ॥ १ । ४ । २३ ॥ "एदोद्भ्यां ङसिङसो रः" ॥ १ । ४ । ३५ ॥ "ङिर्डौ" ॥ १ । ४ । २५ ॥

"ङित्यन्त्यस्वरादेः" ॥ २ । १ । ११४ ॥ "ह्रस्वस्य गुणः" ॥ १ । ४ । ४१ ॥ ८ ॥ अग्निः अग्नी अग्नयः । अग्निम् अग्नीन् । अग्निना अग्निभ्याम्० ॥ अग्नये । अग्नेः २ । अग्न्योः २ । अग्नीनाम् । अग्नौ० अग्निषु ॥ आ० हे अग्ने !० ॥९॥

**विशेषः सखि-पत्योस्तु, पन्थि मन्थि-ऋभुक्षिषु ।**
**इकारान्ताः स्त्रियां बुद्धि,-मुख्या धूलि-मुखाः समाः ॥ १० ॥**

सौ "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ सखा "सख्युरितो०" ॥ १ । ४ । ८३ ॥ सखायौ सखायः ॥ सखायम् सखीन् ॥ "न नाङिदेत्" ॥ १ । ४ । २७ । सख्या सख्ये । "खितिखीती०" ॥ १ । ४ । ३६ ॥ सख्युः २ ॥ "केवलसखि०" ॥ १ । ४ । २६ ॥ सख्यौ ॥ शेषमग्निवत् ॥ आ० हे सखे ! हे सखायौ ! हे सखायः ! ॥ "न नाङिदेत्" ॥ १ । ४ । २७ ॥ पत्या पत्ये ॥ "खितिखीती०" ॥ १ । ४ । ३६ ॥ पत्युः २ ॥ "केवलसखि०" ॥ १ । ४ । २६ ॥ पत्यौ ॥ शेषोऽग्निवत् । सपूर्वस्तु सर्वत्राग्निवत् पतिः ॥ सखिस्तु सपूर्वः-प्रियसखा प्रियसखायौ प्रियसखायः ॥ प्रियसखाय प्रियसखायौ प्रियसखीन् । अग्रेऽग्निवत् ॥ आ० हे प्रियस, ३ खे, खायौ, खायः ! । अत्र ग्रन्थे कातन्त्रानुसारात् पथ्यादयः ३ शब्दा इकारान्तत्वादिना उपात्ताः । व्याकरणे तु पथिन् मथिन् ऋभुक्षिन् इति रीत्या नकारान्तत्वेन । अतस्तत्र इय प्रक्रिया-"पथिन्मथि०" ॥ १ । ४ । ७६ ॥ सौ नस्य आः "एः" ॥ १ । ४ । ७७ ॥ इति इकारस्य आः "थो न्थ्" ॥ १ । ४ । ७८ ॥ पन्थाः । "एः" ॥ १ । ४ । ७७ ॥ "थो न्थ्" ॥ १ । ४ । ७८ ॥ पन्थानौ पन्थानः । पन्थान पन्थानौ "इन् ङीस्वरे लुक्" ॥ १ । ४ । ७९ ॥ पथः । पथा "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ नलोपे पथिभ्याम् । आ० हे पन्थाः ! हे पन्थानौ ! हे पन्थानः ! ॥ एव मथिन् ॥ ऋभुक्षाः ऋभुक्षाणौ ऋभुक्षाणः । ऋभुक्षाणं ऋभुक्षाणौ "इन् ङीस्वरे लुक्" ॥ १ । ४ । ७९ ॥ ऋभुक्षः । ऋभुक्षिभ्याम्० । ऋभुक्षिषु । आमन्त्रणेऽप्येवम् ॥ स्त्रियां सुपथी नदीवत् ॥ क्लीबे सुपथि सुपथिनी सुपथीनि २ । आ० "क्लीबे वा" ॥ २ । १ । ९३ ॥ हे सुपथिन्, हे सुपथि ! । अत्र नित्यत्वात् सेर्लुपि सेरभावात् आ न स्यात् ॥

एषां स्त्रीत्वात् शसः सस्य नो न ॥ बुद्धीः "स्त्रिया ङितां वा दैदास् दास् दाम्" ॥ १ । ४ । २८ ॥ बुद्ध्यै, बुद्धये । बुद्ध्याः, बुद्धेः २ । बुद्धीनां, बुद्धौ ॥ शेषं अग्निवत् ॥ धूल्यादीनां तु "इतोऽक्त्यर्थात्" ॥ २ । ४ । ३२ ॥ इति ङीप्रत्यये धूली-भूमी-मुख्या नदीवत् ॥ बुद्धि-मत्यादीना तु क्तिनिष्पन्नत्वात् ङीर्न ॥ १० ॥

**वारि-प्रभृतयस्तुल्या, इकारान्ता नपुंसके ।**
**अस्थि-दधि-सक्थ्यक्ष्णां तु, विज्ञेयं पुनरन्तरम् ॥ ११ ॥**

"अनतो लुप्" ॥ १ । ४ । ५९ ॥ वारि "औरीः" ॥ १ । ४ । ५६ ॥ "अनाम्स्वरे नोन्तः" ॥ १ । ४ । ६४ ॥ वारिणि "स्वराच्छौ" ॥ १ । ४ । ६५ ॥ "नि दीर्घः" ॥ १ । ४ । ८५ ॥ वारीणि अत्र इनो लाक्षणिकत्वात् "इन्-हन्पूषा०" ॥ १ । ४ । ८७ ॥ इत्यादिना न दीर्घः ॥ लाक्षणिकस्य अनित्यत्वात् केचित् इन्हन्०"॥ १ । ४ । ८७ ॥ इत्यादिना दीर्घमपि कुर्वन्ति ॥ वारिणा वारिभ्यां वारिभिः । वारिणे० । आमि नागमाभावात् "ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ आम् नाम् "दीर्घो नाम्य०" ॥ १ । ४ । ४७ ॥ वारीणाम् । वारिणो. वारिषु । आ० "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ हे वारे, हे वारि ! हे वारिणी ! हे वारीणि ! ॥ एव भूरि-मुख्याः ॥ भूरि. स्वर्णवाची क्लीबे, प्रचुरवाची वाच्यलिङ्गः वारिवत् ॥

अस्थि । अस्थि अस्थिनी अस्थीनि २ ॥ टादौ स्वरे "दध्यस्थि" ॥ १ । ४ । ६३ ॥ "अनोऽस्य" ॥ २ । १ । १०८ ॥ अस्थ्ना अस्थिभ्याम् अस्थिभिः । अस्थ्ने० । अस्थ्नोः २ । अस्थ्नाम् । "ईङौ वा" ॥ २ । १ । १०९ ॥ अस्थ्नि, अस्थनि० अस्थिषु । आ० हे अस्थे, हे अस्थि ! हे अस्थिनी ! हे अस्थीनि ! ॥ एव दध्यादयोऽपि ३ ॥ अक्षि अक्षिणी अक्षीणि इत्यादि ॥ एवमत्यस्थ्यादयोऽपि ॥ अत्यस्थिः अत्यस्थी अत्यस्थयः । अत्यस्थिम्० अत्यस्थीन् । अत्यस्थ्ना अत्यस्थिभ्याम् अत्यस्थिभिः । अत्यस्थ्ने० इत्यादि ॥ स्त्रिया प्रियास्थिः प्रियास्थी प्रियास्थयः । प्रियास्थिम् प्रियास्थी प्रियास्थी. ॥ प्रियास्थ्न्या अतिदध्न्या इत्यत्र अनादेशे नान्तत्वात् ङीः ॥ एव प्रियास्थ्न्यै इत्यादि ॥ क्लीबे पूर्वमुख्यवत् । टाऽऽदौ स्वरे "वाऽन्यतः पु०" ॥ १ । ४ । ६२ ॥ प्रियास्थ्ना प्रियास्थिना कुलेन इत्यादि ॥

इकार ईकारान्ता एकार-ऐकारान्ता अन्यपदार्थत्वेन क्लीबे इकारान्ता. यथा-अतिनदि, प्रियनारि, जितपृथ्वि, जितासि, अतिरि इत्यादि तेऽपि वारिवत् ॥ टाऽऽदौ स्वरे "वाऽन्यतः पुमा०" ॥ १ । ४ । ६२ ॥ वा पुस्त्वम् ॥ अतिनदिने, अतिनद्ये इत्यादि ॥ अतिरिशब्दस्य तु 'एकदेशविकृतस्य०' अनित्यत्वाद् व्यञ्जनादौ स्यादौ "आ रायो व्यञ्जने" ॥ २ । १ । ५ ॥ इत्यात्वम् अतिराभ्यां कुलाभ्याम् । शेषमतिनदिवत् । टाऽऽदौ स्वरे अतिरिणा पुस्त्वे ह्रस्वाभाव. अतिराया इत्यादि ॥

सुसखि, सुपितृ अत्रापि "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति टाऽऽदौ स्वरे वा पुंस्त्वम्। आ० तु व्यवस्थितविभाषाऽऽश्रयणात् "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति न भवति तेन हे सुसखि ! हे सुपितृ ! कुलम् ॥ ११ ॥

**वाच्यलिङ्गाः शुचिप्रायाः, सुबुद्ध्याद्याः सदृक्क्रियाः ।**
**सुरभि-भूरि-सुमति,-दीर्घाङ्गुलि-मुखा अपि ॥ १२ ॥**
**ईकारान्तास्तु पुंल्लिङ्गा,-स्तुल्या वातप्रमी-मुखाः ।**

सुरभि-भूरि-सुमति-दीर्घाङ्गुलि-सुवारिमुख्या वाच्यलिङ्गाः पुंसि अग्निवत्। स्त्रियां शसि सस्य नत्वं टाया ना इति न शेषमग्निवत्। शुचिशब्दः स्वत एव त्रिलिङ्गोऽस्ति, ततो यदा तस्य स्त्रियां प्रयोगः तदा बुद्धिवत्। क्लीबे वारिवत्। वाच्यलिङ्गव्यवस्थायां तु टाऽऽदौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति वा पुंस्त्वम्। टायां रूपे समे। आमि तु एका प्रक्रिया वाच्यलिङ्गाऽऽमन्त्रणे हे शुचि !। एवं सुरम्याद्याः क्लीबे। सुबुद्ध्याद्या अप्येवं वाच्यलिङ्गाः।

वाताभिमुखगामुको मृगः वातप्रमीः। सर्वत्र स्वरे सन्धिः। अमि वातप्रमीम्। शसि वातप्रमीन्। आमि वातप्रम्याम्। ङौ वातप्रमी। आ० हे वातप्रमीः ! ॥ १२ ॥

**ईकारान्ताः स्त्रियां ज्ञेया, नदी-मही-मुखाः समाः ।**
**लक्ष्मी-श्री-ह्री-धी-मुख्यानां, स्त्रीशब्दस्य तथाऽन्तरम् ॥ १३ ॥**

"दीर्घङ्याब्०" ॥ १ । ४ । ४५ ॥ नदी नद्यौ नद्यः। नदीम् नदीः। नद्या नदीभ्याम् नदीभिः। "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नद्यै। नद्याः २ नदीनाम्। नद्याम् नदीषु। आ० "नित्यदित्०" ॥ १ । ४ । ४३ ॥ इति हे नदि !। एवं मही नखी-पृथ्वी-कुमारी-मुख्याः।

लक्ष्मीः, अवीः, तरीः, सूरीः, तन्द्रीः, तन्त्रीः। तथा श्रीः, ह्रीः, भीः, धीः। इत्येषां लक्ष्म्यादीनामुणादीकारान्तत्वम्। श्री-आदीनां धात्वीकारान्तत्वमतो ङ्यभावात् सिलोपो न। लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः। "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ लक्ष्म्यै०। लक्ष्म्याः २ लक्ष्मीणाम्। आ० "नित्यदिद्द्विस्वरा०" ॥ १ । ४ । ४३ ॥ हे लक्ष्मि ! ॥ श्रीः श्रियौ श्रियः। श्रियम् श्रियः। "वे युवो०" ॥ १ । ४ । ३० ॥ श्रियै, श्रिये। श्रियाः, श्रियः २। "आमो नाम् वा" ॥ १ । ४ । ३१ ॥ श्रीणां, श्रियाम्। श्रियि। आ० हे श्रीः !।

"दीर्घङ्याब्०" ॥ १ । ४ । ४५ ॥ स्त्री "स्त्रियाः" ॥ २ । १ । ५४ ॥ इय् स्त्रियौ स्त्रियः। "वाऽम्शसि" ॥ २ । १ । ५५ ॥ स्त्रियं, स्त्रीम्। स्त्रियः, स्त्रीः। स्त्रिया स्त्रीभ्याम्। "वेयुवो०" ॥ १ । ४ । ३० ॥ इत्यत्र अस्त्रिया इति निर्देशात् परादपि इयुवयत्वादिकार्यात् प्रागेव स्त्रीदूदाश्रित कार्यं स्यात्। "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नित्यं दै स्त्रियै। स्त्रियाः २। स्त्रियोः २ स्त्रीणाम्। स्त्रिया० स्त्रीषु। आ० "नित्यदिद्०" ॥ १ । ४ । ४३ ॥ इति हे स्त्रि ! हे स्त्रियौ ! हे स्त्रियः !। स्त्रियमतिक्रान्तो योऽसौ अतिस्त्रिः अतिस्त्रियौ "इदुतोऽस्त्रे०" ॥ १ । ४ । २१ ॥ इत्यत्र इदमेवाऽस्त्रिग्रहणं ज्ञापकं 'परेणापीयादेशेन कार्यं न बाध्यते' अतिस्त्रयः। एवमग्रेऽपि। "वाऽम्शसि" ॥ २ । १ । ५५ ॥ अतिस्त्रियम्, अतिस्त्रिम् अतिस्त्रियः, अतिस्त्रीन्। अतिस्त्रिणा अतिस्त्रिभ्याम् अतिस्त्रिभिः। अतिस्त्रेः २। अतिस्त्रियोः २। अतिस्त्रीणाम्। अतिस्त्रौ० अतिस्त्रिषु। आ० हे अतिस्त्रे !। स्त्रीलिङ्गे अतिस्त्रीशब्दो मुख्यस्त्रीवत्। क्लीबे वारिवत्। पुमथ्याऽऽदौ "वाऽन्यतः पु०" ॥ १ । ४ । ६२ ॥ वा पुंवत् ॥ १३ ॥

**ईकारान्ता वाच्यलिङ्गा, अतिलक्ष्मी-मुखाः समाः ।**
**पृथुश्री-प्रमुखा भिन्नाः, सेनान्युन्नी-मुखाः पृथक् ॥ १४ ॥**

अतिलक्ष्मीशब्दः पुंस्त्रियोर्मुख्यलक्ष्मीवत्। क्लीबे वारिवत्। टाऽऽदौ "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ वा पुंवत्। आमि पक्षद्वयेऽप्यतिलक्ष्मीणाम्। आ० हे अतिलक्ष्मि !०। एवमतितन्त्रीमुख्याः ॥ पृथुश्रीमुखाना धात्वीकारान्तत्वादियुं पुंस्त्रियोर्मुख्यश्रीशब्दवत्। प्रक्रिया क्लीबे वारिवत्। टाऽऽदौ स्वरे वा पुंस्त्वम्। पुंसि "वेयुवोऽस्त्रियाः" ॥ १ । ४ । ३० ॥ "आमो नाम् वा" ॥ १ । ४ । ३१ ॥ प्राप्तिः। पृथुश्रिणा, पृथुश्रिया। पृथुश्रिभ्याम्। पृथुश्रिणे, पृथुश्रिये, पृथुश्रियै। इत्यादि। आमि पक्ष १ पृथुश्रीणा, पक्ष २ पृथुश्रीणा, पृथुश्रियाम्। आ० हे पृथुश्रि ! ॥ एवं त्यक्तह्री गतभी-आद्याः। यदा बुद्धिवाची धीशब्दः तदा स्त्रीलिङ्गः। शोभना धीर्यस्य यस्या वा इति बहुव्रीहौ सुधीशब्दो वाच्यलिङ्गः। ततः सुधीशब्दो लिङ्गत्रयेऽपि पृथुश्रीवत्। सुपूर्वः 'ध्यै' सुष्ठु ध्यायतीति "दिद्युद्०" ॥ ५ । २ । ८३ ॥ इत्यादिना सुधी विद्वद्वाची पुंल्लिङ्गः। "धातोरिवर्ण०" ॥ २ । १ । ५० ॥ तस्य इय्। आ० हे सुधीः !।

सेनानीमुख्यानां विशेषो यथा–सेनानीः, "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इति यत्वे–सेनान्यौ, सेनान्यः । सेनान्या सेनानीभ्याम्० । आमि–सेनान्याम् । ङौ "निय आम्" ॥ १ । ४ । ५१ ॥ इति सेनान्याम् । आ० हे सेनानीः, हे सेनान्यौ, हे सेनान्यः; स्त्रियामप्येवम्, पर 'स्त्रिया' इति अनुवर्तमाने पुन· स्त्रीग्रहण नित्यस्त्रीविषयार्थम्, तेनात्र दै-आद्या न यथा—सेनान्ये ब्राह्मण्यै इत्यादि । क्लीबे ह्रस्वे सेनानि सेनानिनी सेनानीनि । "टादौ स्वरे वा" पुस्त्व सेनान्या, सेनानिना, सेनानिभ्याम्० । सेनान्ये, सेनानिने, आमि–सेनान्यां, पक्षे–"ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ इति नामि–सेनानीनाम् । ङौ सेनान्याम् । क्लीबे पक्षे ह्रस्वे कृते 'एकदेश०' इति न्यायाद् आम्प्राप्तौ 'आगमाऽऽदेशयोरागमविधिर्बलवान्' इति आगमः, नागमे च कृते पुनर्न स्यात् 'सकृद्बाधित०' इति न्यायात् । सेनानिनि । आ० हे सेनानि । एव उन्नी-ग्रामणी-मुख्याः ॥१४॥

**भिन्ना यवक्री-नी-प्राप्त,–भी-महानी-मुखास्तथा ।**
**शम्भ्वाद्याः पुंस्युकारान्ताः, समाः क्रोष्टु-विवर्जिताः ॥ १५ ॥**

यवक्रीमुखानां विशेषो यथा—यवक्री-देवप्री आद्येषु "सयोगात्" ॥ २ । १ । ५२ ॥ इय् । नी-मी पी ली-सदृशेषु "धातोः०" ॥ २ । १ । ५० ॥ इय् । प्राप्तभी-महानी-परमनी आदिषु क्विब्वृत्त्यभावात् "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ यत्वम् । न "धातोः०" ॥ २ । १ । ५० ॥ इय्–यवक्रीः, यवक्रियौ, यवक्रियः । आमि–यवक्रियाम् । आ० हे यवक्रीः । स्त्रियामप्येव पर नित्यस्त्रीत्वाभावात् "स्त्रीदूत." ॥ १ । ४ । २९ ॥ इति न । क्लीबे ह्रस्वे यवक्रि यवक्रिणी यवक्रीणि । "टादौ स्वरे वा" पुस्त्वम्–यवक्रिणा, यवक्रिया; यवक्रिभ्याम् । आमि–यवक्रीणा, यवक्रियाम् । आ० हे यवक्रि । एव नी-प्राप्तभी-महानी-मुखाः । पर नीशब्दे ङौ "निय आम्" ॥ १ । ४ । ५१ ॥ नियाम् ।

शम्भुशब्दस्यापि अग्निवत् प्रक्रिया । एव भानु-विभु-मुख्याः ॥ क्रोष्टुविशेषो यथा—"क्रुशस्तुनस्तृच् पुंसि" ॥ १ । ४ । ९१ ॥ इति शेषघुटि तृच्, "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ क्रोष्टा । "तृस्वसृनप्तृ०" ॥ १ । ४ । ३८ ॥ क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टून् । "टादौ स्वरे वा" ॥ १ । ४ । ९२ ॥ पुंस्येव वा तृच्–क्रोष्ट्रा, क्रोष्टुना; क्रोष्टुभ्याम्, क्रोष्टुभिः । आ० हे क्रोष्टा, हे क्रोष्टारौ, हे क्रोष्टारः । क्लीबे बहवः क्रोष्टारो यत्र वने तद् बहुक्रोष्टु वनम् अत्र 'पुंसि' इत्युक्त तृच् न । ततो जतुवत् । स्त्रियाम् ङीप्रत्यये "स्त्रियाम्०" ॥ १ । ४ । ९३ ॥ इति तृजादेशे क्रोष्ट्री, नदीवत् ॥ १५ ॥

**धेनु-मुख्या उकारान्ताः, स्त्रीलिङ्गाः सदृशक्रियाः ।**
**जतु-प्राया उकारान्ताः, समानाः स्युर्नपुंसके ॥ १६ ॥**

धेनुशब्दो बुद्धिवत् । एव प्रियङ्गुमुख्याः । कथं हे भीरु । स्त्रीपर्यायादूङि कृते भविष्यति । ये जातिवचनत्वम-निच्छन्त ऊ ऊङ न मन्यन्ते तेषा मते भीरा इत्येव स्यात् । कथ हे सुतनुः अत्र तनू शब्दः । केषाचिन्मते सबोधने गुणो दृष्टो न भीरो· सुतनोः स्त्रियाम् ।

जतु वारिवत् । एवमस्रु-मुख्याः ॥ १६ ॥

**उकारान्ता वाच्यलिङ्गाः, पटु-लघ्वादयः समाः ।**
**ऊकारान्ताः पुंसि हूहू,–नग्नहू-प्रमुखाः समाः ॥ १७ ॥**

पुंसि शम्भुवत् । स्त्रियां धेनुवत् । वा ङ्यां पट्वी नदीवत् । क्लीबे जतुवत् । टादौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति वा पुंस्त्वम् न० माषदलन्यादि सुराबीजम् । हूहूः० हूहून् । सर्वत्र स्वरे सन्धिः ॥ १७ ॥

**स्वयंभू-प्रतिभू-प्रायाः, सदृशाः खलपूः पृथक् ।**
**एभ्यो वर्षाभू-पुनर्भू-शब्दयोरन्तरं मतम् ॥ १८ ॥**

स्वयंभूः "दृन्पुन०" ॥ २ । १ । ५९ ॥ इति नियमात्, "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इत्यप्राप्तौ, "धातोः०" ॥ २ । १ । ५० ॥ इत्युव्–स्वयम्भुवौ । अग्रेऽप्येवम् । एवमात्मभू-मनोभ्वाद्याः ।

खलपूः स्वरे "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इति च वत्व, खलप्वौ ॥

वर्षाभूः स्वरे "दृन्पुनर्०" ॥ २ । १ । ५९ ॥ इति वत्वे–वर्षाभ्वौ । पुनर्भूः वर्षाभूवत् । परं स्त्रीत्वात् "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ इति दै-आद्या· पुनर्भ्वै० । आ० हे पुनर्भु । वर्षाभूर्यदा मण्डूक्यां तदा स्त्रीलिङ्गः पुनर्भूवत् ॥ १८ ॥

**स्त्रियामूदन्ता वध्वाद्याः, समा भ्रूर्भूश्च भेदभाक् ।**
**समा वाच्यलिङ्गा अति,–चमू प्राप्तवधू-मुखाः ॥ १९ ॥**

वधूर्नदीवत् पर सेर्लोपो न वधू· । एव ऊङन्ता रम्भोरू-लक्ष्मणोरूमुख्याः । तथा कच्छू-जम्बूप्राया वधूवत् । जम्बू

सुसखि, सुपितृ अत्रापि "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति टाऽऽदौ स्वरे वा पुंस्त्वम् । आ० तु व्यवस्थितविभाषाऽऽश्रयणात् "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति न भवति तेन हे सुसखि ! हे सुपितृ ! कुलम् ॥ ११ ॥

**वाच्यलिङ्गाः शुचिप्रायाः, सुबुद्ध्याद्याः सदृक्क्रियाः ।**
**सुरभि-भूरि-सुमति,-दीर्घाङ्गुलि-मुखा अपि ॥ १२ ॥**
**ईकारान्तास्तु पुँल्लिङ्गा,-स्तुल्या वातप्रमी-मुखाः ।**

सुरभि-भूरि-सुमति-दीर्घाङ्गुलि-सुवारिमुख्या वाच्यलिङ्गाः पुंसि अग्निवत् । स्त्रियां शसि सस्य नत्व टाया ना इति न शेषमग्निवत् । शुचिशब्दः स्वत एव त्रिलिङ्गोऽस्ति, ततो यदा तस्य स्त्रियां प्रयोगः तदा बुद्धिवत् । क्लीबे वारिवत् । वाच्यलिङ्गव्यवस्थाया तु टाऽऽदौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति वा पुंस्त्वम् । टाया रूपे समे । आमि तु एका प्रक्रिया वाच्यलिङ्गाऽऽमन्त्रणे हे शुचि ! । एवं सुरभ्याद्याः क्लीबे । सुबुद्ध्याद्या अप्येवं वाच्यलिङ्गाः ।

वाताभिमुखगामुको मृगः वातप्रमी. । सर्वत्र स्वरे सन्धिः । अमि वातप्रमीम् । शसि वातप्रमीन् । आमि वातप्रम्याम् । ङौ वातप्रमी । आ० हे वातप्रमीः ! ॥ १२ ॥

**ईकारान्ताः स्त्रियां ज्ञेया, नदी-मही-मुखाः समाः ।**
**लक्ष्मी-श्री-ह्री-धी-मुख्यानां, स्त्रीशब्दस्य तथाऽन्तरम् ॥ १३ ॥**

"दीर्घङ्याब्०" ॥ १ । ४ । ४५ ॥ नदी नद्यौ नद्यः । नदीम् नदीः । नद्या नदीभ्याम् नदीभिः । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नद्यै । नद्याः २ नदीनाम् । नद्याम् नदीषु । आ० "नित्यदित्०" ॥ १ । ४ । ४३ ॥ इति हे नदि ! । एवं मही नखी-प्लवी-कुमारी-मुख्याः ।

लक्ष्मीः, अवीः, तरीः, सूरीः, तन्द्रीः, तन्त्रीः । तथा श्रीः, ह्रीः, भीः, धीः । इत्येषां लक्ष्म्यादीनामुणादीकारान्तत्वम् । श्री-आदीनां धात्वीकारान्तत्वमतो ङ्यभावात् सिलोपो न । लक्ष्मीः लक्ष्म्यौ लक्ष्म्यः । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ लक्ष्म्यै० । लक्ष्म्याः २ लक्ष्मीणाम् । आ० "नित्यदिद्द्विस्वरा०" ॥ १ । ४ । ४३ ॥ हे लक्ष्मि ! ॥ श्रीः श्रियौ श्रियः । श्रियम् श्रियः । "वे युवो०" ॥ १ । ४ । ३० ॥ श्रियै, श्रिये । श्रियाः, श्रियः २ । "आमो नाम् वा" ॥ १ । ४ । ३१ ॥ श्रीणां, श्रियाम् । श्रियि । आ० हे श्रीः ! ।

"दीर्घङ्याब्०" ॥ १ । ४ । ४५ ॥ स्त्री "स्त्रियाः" ॥ २ । १ । ५४ ॥ इय् स्त्रियौ स्त्रियः । "वाऽम्शसि" ॥ २ । १ । ५५ ॥ स्त्रियं, स्त्रीम् । स्त्रियः, स्त्रीः । स्त्रिया स्त्रीभ्याम् । "वेयुवो०" ॥ १ । ४ । ३० ॥ इत्यत्र अस्त्रिया इति निर्देशात् परादपि इयुव्यत्वादिकार्यात् प्रागेव स्त्रीदूदाश्रितं कार्यं स्यात् । "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ नित्यं दै स्त्रियै । स्त्रियाः २ । स्त्रियोः २ स्त्रीणाम् । स्त्रिया० स्त्रीषु । आ० "नित्यदिद्०" ॥ १ । ४ । ४३ ॥ इति हे स्त्रि ! हे स्त्रियौ ! हे स्त्रियः ! । स्त्रियमतिक्रान्तो योऽसौ अतिस्त्रिः अतिस्त्रियौ "इदुतोऽस्त्रेः०" ॥ १ । ४ । २१ ॥ इत्यत्र इदमेवाऽस्त्रिग्रहणं ज्ञापकं 'परेणापीयादेशेन कार्यं न बाध्यते' अतिस्त्रयः । एवमग्रेऽपि । "वाऽम्शसि" ॥ २ । १ । ५५ ॥ अतिस्त्रियम्, अतिस्त्रिम् अतिस्त्रियः, अतिस्त्रीन् । अतिस्त्रिणा अतिस्त्रिभ्याम् अतिस्त्रिभिः । अतिस्त्रेः २ । अतिस्त्रियोः २ । अतिस्त्रीणाम् । अतिस्त्रौ० अतिस्त्रिषु । आ० हे अतिस्त्रे ! । स्त्रीलिङ्गे अतिस्त्रीशब्दो मुख्यस्त्रीवत् । क्लीबे वारिवत् । पुमष्टाऽऽदौ "वाऽन्यतः पु०" ॥ १ । ४ । ६२ ॥ वा पुंवत् ॥ १३ ॥

**ईकारान्ता वाच्यलिङ्गा, अतिलक्ष्मी-मुखाः समाः ।**
**पृथुश्री-प्रमुखा भिन्नाः, सेनान्युन्नी-मुखाः पृथक् ॥ १४ ॥**

अतिलक्ष्मीशब्दः पुंस्त्रियोर्मुख्यलक्ष्मीवत् । क्लीबे वारिवत् । टाऽऽदौ "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ वा पुंवत् । आमि पक्षद्वयेऽप्यतिलक्ष्मीणाम् । आ० हे अतिलक्ष्मि !० । एवमतितन्त्रीमुख्याः ॥ पृथुश्रीमुखाना धात्वीकारान्तत्वादियुपुंस्त्रियोर्मुख्यश्रीशब्दवत् । प्रक्रिया क्लीबे वारिवत् । टाऽऽदौ स्वरे वा पुंस्त्वम् । पुंसि "वेयुवोऽस्त्रियाः" ॥ १ । ४ । ३० ॥ "आमो नाम् वा" ॥ १ । ४ । ३१ ॥ प्राप्तिः । पृथुश्रिणा, पृथुश्रिया । पृथुश्रिभ्याम् । पृथुश्रिणे, पृथुश्रिये, पृथुश्रियै । इत्यादि । आमि पक्ष १ पृथुश्रीणा, पक्ष २ पृथुश्रीणा, पृथुश्रियाम् । आ० हे पृथुश्रि ! ॥ एवं त्यक्तह्री गतभी-आद्याः । यदा बुद्धिवाची धीशब्दः तदा स्त्रीलिङ्गः । शोभना धीर्यस्य यस्या वा इति बहुव्रीहौ सुधीशब्दो वाच्यलिङ्गः । ततः सुधीशब्दो लिङ्गत्रयेऽपि पृथुश्रीवत् । सुपूर्वः 'ध्यै' सुष्ठु ध्यायतीति "दिद्युद्०" ॥ ५ । २ । ८३ ॥ इत्यादिना सुधीः विद्वद्वाची पुँल्लिङ्गः । "धातोरिवर्ण०" ॥ २ । १ । ५० ॥ तस्य इय् । आ० हे सुधीः ! ।

सेनानीमुख्यानां विशेषो यथा–सेनानीः, "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इति यत्वे-सेनान्यौ, सेनान्यः । सेनान्या सेनानीभ्याम्० । आमि-सेनान्याम् । ङौ "निय आम्" ॥ १ । ४ । ५१ ॥ इति सेनान्याम् । आ० हे सेनानीः, हे सेनान्यौ, हे सेनान्यः; स्त्रियामप्येवम्, परं 'स्त्रिया' इति अनुवर्तमाने पुनः स्त्रीग्रहणं नित्यस्त्रीविषयार्थम्, तेनात्र दै-आद्या न यथा—सेनान्ये ब्राह्मण्यै इत्यादि । क्लीबे ह्रस्वे सेनानि सेनानिनी सेनानीनि । "टादौ स्वरे वा" पुंस्त्वं सेनान्या, सेनानिना; सेनानिभ्याम्० । सेनान्ये, सेनानिने; आमि–सेनान्यां, पक्षे–"ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ इति नामि–सेनानीनाम् । ङौ सेनान्याम् । क्लीबे पक्षे ह्रस्वे कृते 'एकदेश०' इति न्यायाद् आम्प्राप्तौ 'आगमाऽऽदेशयोरागमविधिर्बलवान्' इति आगमः, नागमे च कृते पुनर्न स्यात् 'सकृद्बाधित०' इति न्यायात् । सेनानिनि । आ० हे सेनानि । एव उन्नी ग्रामणी-मुख्याः ॥१४॥

**भिन्ना यवक्री-नी-प्राप्त,-भी-महानी-मुखास्तथा ।**
**शम्भ्वाद्याः पुंस्युकारान्ताः, समाः क्रोष्टु-विवर्जिताः ॥ १५ ॥**

यवक्रीमुखानां विशेषो यथा—यवक्री-देवप्री आद्येषु "संयोगात्" ॥ २ । १ । ५२ ॥ इय् । नी-भी पी ली-सदृशेषु "धातोः०" ॥ २ । १ । ५० ॥ इय् । प्राप्तभी-महानी-परमनी आदिषु क्विब्वृत्त्यभावात् "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ यत्वम् । न "धातोः०" ॥ २ । १ । ५० ॥ इय्–यवक्रीः, यवक्रियौ; यवक्रियः । आमि–यवक्रियाम् । आ० हे यवक्रीः । स्त्रियामप्येव पर नित्यस्त्रीत्वाभावात् "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ इति न । क्लीबे ह्रस्वे यवक्रि यवक्रिणी यवक्रीणि । "टादौ स्वरे वा" पुंस्त्वम्–यवक्रिणा, यवक्रिया; यवक्रिभ्याम् । आमि–यवक्रीणां, यवक्रियाम् । आ० हे यवक्रि । एव नी-प्राप्तभी-महानी-मुखाः । पर नीशब्दे ङौ "निय आम्" ॥ १ । ४ । ५१ ॥ नियाम् ।

शंभुशब्दस्यापि अग्निवत् प्रक्रिया । एव भानु-विभु-मुख्याः ॥ क्रोष्टुविशेषो यथा—"क्रुशस्तुनस्तृच् पुंसि" ॥ १ । ४ । ९१ ॥ इति शेषघुटि तृच्, "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ क्रोष्टा । "तृस्वसृनप्तृ०" ॥ १ । ४ । ३८ ॥ क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टून् । "टादौ स्वरे वा" ॥ १ । ४ । ९२ ॥ पुंस्येव वा तृच्–क्रोष्ट्रा, क्रोष्टुना; क्रोष्टुभ्याम्, क्रोष्टुभिः । आ० हे क्रोष्टा, हे क्रोष्टारौ, हे क्रोष्टारः । क्लीबे बहवः क्रोष्टारो यत्र वने तद् बहुक्रोष्टु वनम् अत्र 'पुंसि' इत्युक्त तृच् न । ततो जतुवत् । स्त्रियाम् ङीप्रत्यये "स्त्रियाम्०" ॥ १ । ४ । ९३ ॥ इति तृजादेशे क्रोष्ट्री, नदीवत् ॥ १५ ॥

**धेनु-मुख्या उकारान्ताः, स्त्रीलिङ्गाः सदृशक्रियाः ।**
**जतु-प्राया उकारान्ताः, समानाः स्युर्नपुंसके ॥ १६ ॥**

धेनुशब्दो बुद्धिवत् । एव प्रियङ्गुमुख्याः । कथं हे भीरु । स्त्रीपर्यायादूङि कृते भविष्यति । ये जातिवचनत्वम्-निच्छन्त ऊ ऊङं न मन्यन्ते तेषां मते भीरा इत्येव स्यात् । कथ हे सुतनुः अत्र तनू शब्दः । केषांचिन्मते संबोधने गुणो इष्टो न भीरोः सुतनोः स्त्रियाम् ।

जतु वारिवत् । एवमस्तु-मुख्याः ॥ १६ ॥

**उकारान्ता वाच्यलिङ्गाः, पटु-लघ्वादयः समाः ।**
**ऊकारान्ताः पुंसि हूहू,–नग्नहू-प्रमुखाः समाः ॥ १७ ॥**

पुंसि शम्भुवत् । स्त्रिया धेनुवत् । वा ङ्यां पट्वी नदीवत् । क्लीबे जतुवत् । टादौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति वा पुंस्त्वम् न० माषदलन्यादि सुराबीजम् । हूहूः० हूहून् । सर्वत्र स्वरे सन्धिः ॥ १७ ॥

**स्वयंभू-प्रतिभू-प्रायाः, सदृशाः खलपूः पृथक् ।**
**एभ्यो वर्षाभू-पुनर्भू-शब्दयोरन्तरं मतम् ॥ १८ ॥**

स्वयंभूः "दृन्पुन०" ॥ २ । १ । ५९ ॥ इति नियमात्, "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इत्यप्राप्तौ, "धातोः०" ॥ २ । १ । ५० ॥ इत्युव्–स्वयंभुवौ । अग्रेऽप्येवम् । एवमात्मभू-मनोभ्वाद्याः ।

खलपूः स्वरे "क्विब्वृत्तेः०" ॥ २ । १ । ५८ ॥ इति च वत्व, खलप्वौ ॥

वर्षाभूः स्वरे "दृन्पुनर०" ॥ २ । १ । ५९ ॥ इति वत्वे–वर्षाभ्वौ । पुनर्भूः वर्षाभूवत् । परं स्त्रीत्वात् "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ इति दै-आद्याः पुनर्भ्वै० । आ० हे पुनर्भु । वर्षाभूर्यदा मण्डूक्यां तदा स्त्रीलिङ्गः पुनर्भूवत् ॥ १८ ॥

**स्त्रियामूदन्ता वध्वाद्याः, समा भ्रूर्भूश्च भेदभाक् ।**
**समा वाच्यलिङ्गा अति,–चमू प्राप्तवधू-मुखाः ॥ १९ ॥**

वधूर्नदीवत् पर सेर्लोपो न वधूः । एव ऊङन्ता रम्भोरू-लक्ष्मणोरूमुख्याः । तथा कच्छू-जम्बूप्राया वधूवत् । जम्बू

स्त्रीक्लीबलिङ्गः । ऊदन्तोऽथ षण्ढे "क्लीबे" ॥ २ । ४ । ९७ ॥ इति ह्रस्वे उदन्तता । इयं जम्बूरिदं जम्बु जम्बूवृक्षफलं तथा । जम्बू वृक्षवाचकोऽपि स्त्रीलिङ्गः, तथा च नैषधे "एतत्तरुः" (११।८५) । भ्रूः स्वरे "भ्रूश्नोः" ॥ २ । १ । ५३ ॥ इति उव् भ्रुवौ० । "वेयुवो०" ॥ १ । ४ । ३० ॥ इति वा दै-आद्याः भ्रुवै, भ्रुवे आ० हे भ्रूः । कथं हे सुभ्रु अत्र भ्रुरुकारान्तः । ऊडन्तस्य वा ह्रस्वे । भ्रूवत् भूः परं "धातोः०" ॥ २ । १ । ५० ॥ इति उव् । "वेयुवो०" ॥ १ । ४ । ३० ॥ इति वा दै-आद्याः । आमि–भूनां, भुवाम् । ङौ भुवां, भुवि । अतिचमू-प्राप्तवधू-अतलाबू–मुख्याः । पुंस्त्रियोर्मुख्यवधूवत् । क्लीबे ह्रस्वे जतुवत् । टादौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति पुंस्त्वम्, विद्यानन्दे तु देवयजी-बहुचमू-आद्या वातप्रमीवदुक्ताः । देवयजीन्, बहुचमून् इत्यादि ॥ १९ ॥

**धातूदन्ता वाच्यलिङ्गाः, सकृल्लू-प्रमुखाः समाः ।**
**भिन्नाः कटप्रू-लू-प्रास,–लू-महाप्रू-मुखाः समाः ॥ २० ॥**

सकृल्लूः । उन्नीसकृल्लूसद्दशेषु क्रीभ्रूवत् धातुसवन्धो न सयोगस्ततः स्वरे "क्विब्वृत्ते०" ॥ २ । १ । ५८ ॥ इति वत्वे सकृल्वौ, एवं स्त्रियामपि । नित्यस्त्रीत्वाभावात् दै-आद्या न–सकृल्वे ब्राह्मण्यै । क्लीबे ह्रस्वः ततो मधुवत् । "टादौ स्वरे वा" पुंस्त्वम् । एवं यवलूः, सर्वसूः ।

कटप्रूशब्दस्य सयोगपरत्वात् लूशब्दे वृत्त्यभावात् प्राप्तलू-महाप्रूशब्दयोः क्विब्वृत्त्यभावात्, यथाप्राप्त स्वरे उव् कटप्रुः, कटप्रुवौ० । आ० हे कटप्रूः । स्त्रियामप्येवम् । परं नित्यस्त्रीत्वाभावात् "स्त्रीदूतः" ॥ १ । ४ । २९ ॥ इति दै-आद्या न । क्लीबे ह्रस्वे मधुवत् । टादौ स्वरे वा पुंस्त्वम् । एवमक्षद्यू-आद्याः सयुक्तधातूदन्ताः ॥ २० ॥

**ऋकारान्ताः पितृ-भ्रातृ,–मुखाः पुंसि समक्रियाः ।**
**नृशब्दस्यान्तरं प्रोक्तं, षष्ठ्यन्तवचने सति ॥ २१ ॥**

पितृ "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ पिता । "अर्डौ च" ॥ १ । ४ । ३९ ॥ पितरौ० ॥ "शसोऽता सश्च नः पुंसि" ॥ १ । ४ । ४९ ॥ पितॄन्, स्वरे रत्वे पित्रा । "ऋतो डुर्" ॥ १ । ४ । ३७ ॥ पितुः २ । "ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ पितॄणाम् । "अर्डौ च" ॥ १ । ४ । ३९ ॥ पितरि । आ० "ह्रस्वस्य गुणः" ॥ १ । ४ । ४१ ॥ हे पितः !, "नुर्वा" ॥ १ । ४ । ४८ ॥ इत्यामि–नृणां, नॄणाम् ॥ २१ ॥

**स्त्रियां मातृ-मुखाः प्रोक्ता, ऋकारान्ताः समक्रियाः ।**
**स्वस्रादीनां पितृष्वसृ,–मातृष्वस्रोस्तथाऽन्तरम् ॥ २२ ॥**

मातृ-दुहितृ-मुख्याः पितृवत् । परं शसि–मातॄः । स्वसा "तृस्वसृ०" ॥ १ । ४ । ३८ ॥ इति घुटि आर्–स्वसारौ ४ । स्त्रीत्वात् शेषं मातृवत् । स्वसृ स्त्री । शेषाः ७ पुंसि तेषां शसि–नप्तॄन् इत्यादि । चारुस्वसृशब्दोऽपि पुंस्त्रियोः स्वसृवत् । क्लीबे वारिवत् । टादौ स्वरे वा पुंस्त्वं च । एवं शेषाः ७ ॥ २२ ॥

**वाच्यलिङ्गा ऋकारान्ताः, कर्तृ-प्रभृतयः समाः ।**
**ऋकारान्ताः पितृ-मुख्याः, पुंसि तुल्यक्रियाः स्मृताः ॥ २३ ॥**

कर्त्ता "तृस्वसृ०" ॥ १ । ४ । ३८ ॥ कर्त्तारौ ४ । शेषं पितृवत् । स्त्रियां ङ्यां रत्वे कर्त्री नदीवत्, क्लीबे वारिवत् । टादौ स्वरे वा पुंस्त्वम् । एवं तृजन्त-भर्तृ-भोक्तृमुख्याः । सुमातृ पुंसि पितृवत्, क्लीबे क्लीबकर्तृवत् । आ० "मातुर्मातः०" ॥ १ । ४ । ४० ॥ इति अहें पुत्रे हे गार्गीमात ॥

पितुः ॠः पितॄः अमूशसौ विना स्वरे सन्धिः । पित्रौ, पित्रः । पित्रं पितॄन् ॥ २३ ॥

**स्त्रियां पितॄ-मुखास्तुल्याः, क्लीबे सुपितृवत् पुनः ।**
**लृकारान्ता वाच्यलिङ्गाः, प्रियक्लृ-प्रमुखाः समाः ॥ २४ ॥**

यदा तु पितुः ऋर्देवमाता तदा स्त्रीलिङ्गः, शसि–पितॄः । शेषं पुंवत् । शोभना पितॄर्यत्र कुले इति क्लीबे ह्रस्वे सुपितृवत् । टादौ स्वरे वा पुंस्त्वम् ॥

पुंसि–प्रियक्लः, प्रियक्लॄन्, स्वरे सन्धिः, आमि–प्रियक्लॄणाम् । स्त्रियामप्येवम् । शसि–प्रियक्लॄः । क्लीबे प्रियक्लृ, प्रियक्लृनी, प्रियक्लृनि २ । टादौ स्वरे वा पुंस्त्वम् । एवं प्रियगम्लृ-अतिक्लृ-मुख्याः ॥ २४ ॥

**लृकारान्ता वाच्यलिङ्गाः, प्रियक्लृ-प्रमुखास्तथा ।**
**एकारान्ताः से-परमे,–मुख्यास्तुल्यक्रिया मताः ॥ २५ ॥**

प्रियक्लृः इत्यादि प्रियक्लृवत् । परं तु आमि–"ह्रस्वापश्च" ॥ १ । ४ । ३२ ॥ न–प्रियक्लाम् । स्त्रियामप्येवम् । शसि–प्रियक्लॄः । क्लीबे ह्रस्वे प्रियक्लृ, प्राग्प्रियक्लृवत् । एवमतिक्लृ ॥

सेः कामी स्मरप्रिया वा पुंस्त्रियोः सदृशा प्रक्रिया । सेः । स्वरे अय् सयौ० । "एदोद्भ्यां ङसिङसो रः" ॥ १ । ४ । ३५ ॥ सेः, मतान्तरेण वा सयः । आ० "अदेतः स्यमोर्लुक्" ॥ १ । ४ । ४४ ॥ हे से । एव परमे ॥ २५ ॥

**ऐकारान्तो रैः पुंनार्यो,–रोकारान्तस्तथैव गोः ।**
**औकारान्तो ग्लौः पुल्लिङ्गे, नौः स्त्रीलिङ्गे समक्रियौ ॥ २६ ॥**

"आ रायो व्यञ्जने" ॥ २ । १ । ५ ॥ राः, स्वरे आय्–रायौ । आ० हे राः । बहुरैः पुसि स्त्रियां च मुख्यैरैवत् । क्लीबे ह्रस्वे बहुरि बहुरिणी बहुरीणि २ । टादौ स्वरे वा पुस्त्व बहुराया, बहुरिणा । ह्रस्वे एकदेशविकृतस्य अनन्यत्वात् आत्वे बहुराभ्याम् । आ० हे बहुरि ॥

"ओतः औः" ॥ १ । ४ । ७४ ॥ घुटि गौः गावौ गाव. । "आ अमशसोऽता" ॥ १ । ४ । ७५ ॥ गाम् गाः० । "एदोद्भ्यां ङसिङसो रः" ॥ १ । ४ । ३५ ॥ गोः २ । आ० हे गौः । स्त्रियामप्येवम् । चित्रा गावोऽस्य "गोश्चान्ते०" ॥ २ । ४ । ९६ ॥ पुसि शम्भुवत् । स्त्रियां धेनुवत् । क्लीबे ह्रस्वे जतुवत् टादौ स्वरे वा पुस्त्वम् । एव द्यो नाकवाची स्त्री गोवत् पर त्वस्य ङसिङसोर्मतान्तरेण वा र् द्योः द्यवः २ ॥

ग्लौः । स्वरे आव् ग्लावौ । आ० हे ग्लौ. । एव नौ. नावौ । सुनौः पुंस्त्रियोः समः । सुनौः सुनावौ । क्लीबे ह्रस्वे सुनु सुनुनी सुनूनि २ । टादौ स्वरे वा पुस्त्व सुनुना, सुनावा ॥ २६ ॥

इति श्रीवायटगच्छीयश्रीजिनदत्तसूरिशिष्यपण्डितश्रीमदमरचन्द्रानुस्मृते स्यादिशब्दसमुच्चये स्वरान्तशब्दोल्लास. प्रथम प्रक्रम. ॥ १ ॥

---

**वाच्यलिङ्गाः कवर्गान्ताः, स्वस्वोक्तप्रक्रियाजुषः ।**
**पुंसि स्त्रियां च सदृशा, भेदभाजो नपुंसके ॥ २७ ॥**

कन्ता–'चकि तृप्तौ' सुष्ठु चकते सुचक्–"दीर्घङयाब्व्यञ्जनात् सेः" ॥ १ । ४ । ४५ ॥ सिलुक्, "विरामे वा" ॥ १ । ३ । ५१ ॥ सुचक्, सुचग् । स्वरे सन्धि. सुचकौ । "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ सुचग्भ्याम्० । "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ सुचक्षु, "शिट्याद्यस्य०" ॥ १ । ३।५९ ॥ सुचख्षु । तत्र २ शब्दे दर्शितरूपसिद्धि विना स्त्रिया व्यञ्जनान्ता पुल्लिङ्गसमा ज्ञेया. । क्लीबे सुचक्, सुचग्, सुचकी, सुचङ्कि २ ॥

खन्ता.–चित्रलिख्–"धुटस्तृतीय." ॥ २ । १ । ७६ ॥, "विरामे वा" ॥ १ । ३ । ५१ ॥ चित्रलिक्, चित्रलिग् । स्वरे सन्धिः चित्रलिखौ । "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ चित्रलिग्भ्याम् । "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ कत्वे, "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ इति षत्वे,–चित्रलिक्षु, "शिट्याद्यस्य द्वितीयो वा" ॥ १ । ३ । ५९ ॥ चित्रलिख्षु । क्लीबे–चित्रलिक्, चित्रलिग्, चित्रलिखी, चित्रलिङ्खि २ ॥

गन्ताः–'कगे हसने' सुष्ठु कगति सुकग्, सुकक्, स्वरे सन्धिः,–सुकगौ० । सुकग्भ्याम्० । "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ कत्वे, 'नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ षत्वे च–सुकक्षु "शिट्याद्यस्य०" ॥ १ । ३ । ५९ ॥ सुकख्षु । क्लीबे–सुकग्, सुकगी सुकङ्गि ॥ सुष्ठु वल्गति सुवल्ग् "दीर्घ०" ॥ १ । ४ । ४५ ॥ सिलोपे, "पदस्य" ॥ २ । १ । ८९ ॥ ग्लोपे, सुवल्, स्वरे सन्धि. सुवल्गौ० । "पदस्य" ॥ २ । १ । ८९ ॥ इति ग्लोपे, सुवल्भ्याम्० । "पदस्य" ॥ २ । १ । ८९ ॥ ग्लोपे, "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ इति षत्वे–सुवल्षु । आ० हे सुवल् । क्लीबे सुवल् सुवल्गी "र्लो वा" ॥ १ । ४ । ६७ ॥ सुवल्ङ्गि, सुवल्गि २ ॥

घन्ताः–'लाघृ' सुष्ठु लाघते सुलाघ्, देवश्लाघ् सिलोपे "धुटस्तृतीय." ॥ २ । १ । ७६ ॥, "विरामे वा" ॥ १ । ३ । ५१ ॥ सुलाक्, सुलाग्, सुलाघौ० । सुलाग्भ्याम्० "अघोषे०" ॥ १ । ३ । ५० ॥ कत्व षत्व सुलाक्षु, सुलाख्षु । क्लीबे सुलाक्, सुलाग् सुलाघी सुलाङ्घि २ ॥

ङन्ता.–पठितोङ् येन पठितङ् अत्राधुट्त्वान्न तृतीय. पठितङौ० । पठितङ्भ्याम् । "ङ्णोः कटावन्तौ शिटि नवा" ॥ १ । ३ । १७ ॥ अन्ते क् पठितङ्क्षु, पठितङ्षु । क्लीबे–पठितङ्, पठितङी, पठितङ्कि ॥ २७ ॥

**चन्ताः पुंस्यम्बुमुच्-प्रायाः, स्त्रियां वाच्-प्रमुखाः समाः ।**
**वाच्यलिङ्गाः स्त्रिग्धत्वच्,–मूलवृश्च्-सुकुञ्च्-मुखा मताः ॥ २८ ॥**

चन्ताः–"चजः कगम्" ॥ २।१।८६॥, "धुटस्तृतीय." ॥ २ । १ । ७६ ॥, "विरामे वा" ॥ १ । ३ । ५१ ॥,–अम्बुमुक–ग् । स्वरे सन्धिः–अम्बुमुचौ । तृतीये अम्बुमुग्भ्याम् । अम्बुमुक्षु, अम्बुमुख्षु । एव जलमुचाद्याः । वाक्, वाग्, वाचौ । तृतीये वाग्भ्याम् । वाक्षु, वाख्षु । एव त्वच्-स्फिच्-शुच्-क्षुच्-रुच्-मुख्याः । स्फिच् घण्टिकापर्यायः । स्त्रिग्ध-

त्वक्, ग् स्निग्धत्वचौ । स्निग्धत्वग्भ्याम् । स्निग्धत्वक्षु, स्निग्धत्वख्षु । स्त्रियामेवम् । क्लीबे–स्निग्धत्वक्, ग् स्निग्धत्वची स्निग्धत्वञ्चि २ । एवं सत्यवाच्–व्यक्तवाच्-मुखाः । मूलवृश्च्–"सस्य शषौ" ॥ १ । ३ । ६१ ॥ सिलोपे, "संयोगस्यादौ०" ॥ २ । १ । ८८ ॥ श्लोपे, "यजसृज०" ॥ २ । १ । ८७ ॥ षत्वे, "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ डे, "विरामे वा" ॥ १ । ३ । ५१ ॥ मूलवृट्, मूलवृड् । स्वरे सन्धि· मूलवृश्चौ । "संयोगस्यादौ स्कोर्लुक्" ॥ २ । १ । ८८ ॥ श्लोपे, "यजसृज०" ॥ २ । १ । ८७ ॥ षे; डे च मूलवृड्भ्याम् । "अघोषे०" ॥ १ । ३ । ५० ॥ टे, मूलवृट्सु, "शिट्याद्यस्य०" ॥ १ । ३ । ५९ ॥ मूलवृट्त्सु, अत्र "पदान्तात् टवर्गात्०" ॥ १ । ३ । ६३ ॥ इति प्रतिषेधात्, "सस्य शषौ" ॥ १ । ३ । ६१ ॥ न षत्वम् । स्त्रियामप्येवम् । क्लीबे–मूलवृट्, मूलवृड् मूलवृश्ची "धुटां प्राक्" ॥ १ । ४ । ६६ ॥ धुट्जातिर्गृह्यते मूलवृश्चि २ । सुष्ठु कुञ्चति इति सुकुञ्च्–सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ इति च्लोपे, "युजञ्चक्रुञ्चो नो ङः" ॥ २ । १ । ७१ ॥ पदान्ते न् ङ्–सुकुङ्, स्वरे सन्धिः–सुकुञ्चौ सुकुञ्चः । सुकुञ्चम् । सुकुञ्चा "पदस्य" ॥ २ । १ । ८९ ॥ इति च्लोपे, "युजञ्चक्रुञ्चो नो ङः" ॥ २ । १ । ७१ ॥ इति ङे,–सुकुङ्भ्याम् । "ङ्णोः कटावन्तौ शिटि नवा" ॥ १ । ३ । १७ ॥ इति च क् अन्ते वा सुकुङ्क्षु, सुकुङ्षु । स्त्रियामप्येवम् । क्लीबे–सुकुङ् सुकुञ्ची सुकुञ्चि ॥ २८ ॥

**प्राञ्चपाञ्च्-प्रमुखास्तुल्याः, प्रत्यञ्च्-मध्वञ्च्-मुखाः समाः ।**
**उदञ्च् भिन्नः पृथग् तिर्यञ्च्, सध्र्यञ्च् सम्यञ्च् समाविमौ ॥ २९ ॥**

प्रकर्षेण अञ्चति गच्छति क्विप् "अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ नलुक् प्राच्-सि "अचः" ॥ १ । ४ । ६९ ॥ धुटि नोन्तः सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ च्लोपे "युजञ्च०" ॥ २ । १ । ७१ ॥ न् ङ् प्राङ् प्राञ्चौ प्राञ्चः । प्राञ्चम् "अच् च् प्राग् दीर्घश्च" ॥ २ । १ । १०४ ॥ अणिक्यघुटि यस्वरे अच् च् पूर्वस्य दीर्घः प्राचः । प्राचा "चजः कगम्" ॥ २ । १ । ८६ ॥ च् क् "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ क् ग् प्राग्भ्याम् प्राग्भिः । प्राचे० । प्राचः २ । "चजः कगम्" ॥ २ । १ । ८६ ॥ "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ सु षु प्राक्षु, "शिट्याद्यस्य०" ॥ १ । ३ । ५९ ॥ प्राख्षु । यदा तु प्राञ्चति प्रपूजयति प्राञ्च् तदा "अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ न नलुक् ततः रूप ५ सदृशाणि । शसाद्यघुट्स्वरे "अच् च् प्राग्०" ॥ २ । १ । १०४ ॥ इति न । प्राञ्चः । प्राञ्चा "पदस्य" ॥ २ । १ । ८९ ॥ च्लोपे "युजञ्च०" ॥ २ । १ । ७१ ॥ न् ङ् प्राङ्भ्याम् प्राङ्भिः । प्राञ्चे । प्राञ्चः २ प्राञ्चोः । "पदस्य" ॥ २ । १ । ८९ ॥ "युजञ्च०" ॥ २ । १ । ७१ ॥ "ङ्णोः कटौ०" ॥ १ । ३ । १७ ॥ प्राङ्क्षु, प्राङ्षु । एवमन्येऽपि अञ्चन्ताः । आ० हे प्राङ् हे प्राञ्चौ हे प्राञ्चः । स्त्रियाम्–ङ्यां "अच् च् प्राग्०" ॥ २ । १ । १०४ ॥ प्राची, अर्चायां प्राञ्ची नदीवत् । क्लीबे–प्राक्, प्राग् प्राची प्राञ्चि २ । प्राचा प्राग्भ्याम् इत्यादि । अर्चायां सिलोपे "पदस्य" ॥ २ । १ । ८९ ॥ च्लोपे युजञ्च०" ॥ २ । १ । ७१ ॥ प्राङ् प्राञ्ची प्राञ्चि २ । प्राञ्चा । आ० एवम् । एवमपाञ्च्–अवाञ्च्–मुख्या. । प्रत्यञ्चतीति प्रत्यङ् प्रत्यञ्चौ ५ । "अच् च् प्राग् दीर्घश्च" ॥ २ । १ । १०४ ॥ प्रतीचः प्रतीचा प्रत्यग्भ्याम् । प्रत्यक्षु, प्रत्यख्षु । पूजाया तु शसादौ प्रत्यञ्चः । प्रत्यञ्चा प्रत्यङ्भ्याम् । प्रत्यङ्क्षु, प्रत्यङ्षु । स्त्रियां प्रतीची, पूजाया प्रत्यञ्ची नदीवत् । क्लीबे–प्रत्यक्, ग् प्रतीची प्रत्यञ्चि २ । एव दध्यञ्च्–मध्वञ्च् ॥ उदञ्चतीति उदञ्च्–"अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ नलुक् "अचः" ॥ १ । ४ । ६९ ॥ "पदस्य" ॥ २ । १ । ८९ ॥ "युजञ्च०" ॥ २ । १ । ७१ ॥ उदङ् उदञ्चौ ५ । "उदच् उदीच्" ॥ २ । १ । १०३ ॥ अणिक्यघुटि यस्वरादौ उदीच. । उदीचा उदग्भ्याम् । उदक्षु, उदख्षु । पूजाया शसादौ उदञ्चः । उदञ्चा उदङ्भ्याम् । उदङ्क्षु, उदङ्षु । स्त्रियाम्–उदीची, पू० उदञ्ची नदीवत् । क्लीबे–उदक्, ग् उदीची उदञ्चि २ ॥ तिरोऽञ्चति "तिरसस्तिर्यति" ॥ ३ । २ । १२४ ॥ तिर्यञ्च्–"अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ तिर्यङ् तिर्यञ्चौ ५ । "अच् च् प्राग् दीर्घश्च" ॥ २ । १ । १०४ ॥ अच् च् स्वराभावात् प्राग् न दीर्घः । अकाराभावात् तिरि आदेशो न । तिरश्चः । तिरश्चा तिर्यग्भ्याम् तिर्यग्भिः । तिरश्चे । तिर्यक्षु, तिर्यख्षु । पू० शसादौ तिर्यञ्चः । तिर्यञ्चा तिर्यङ्भ्याम् तिर्यङ्भिः । तिर्यङ्क्षु, तिर्यङ्षु । सहाञ्चति समञ्चति "सहसमः सध्रिसमि" ॥ ३ । २ । १२३ ॥ इति सध्र्यञ्च् सम्यञ्च्–सध्र्यङ् सध्र्यञ्चौ ५ । "अच् च० ॥ २ । १ । १०४ ॥ सध्रीच. । सध्रीचा सध्र्यग्भ्याम् । सध्र्यक्षु, सध्र्यख्षु । पूजाया शसादौ सध्र्यञ्चः । सध्र्यङ्भ्याम् । सध्र्यङ्क्षु, सध्र्यङ्षु । स्त्रियाम्–सध्रीची, पू० सध्र्यञ्ची नदीवत् । क्लीबे–सध्र्यक्, सध्र्यग् सध्रीची सध्र्यञ्चि २ । एव सम्यञ्च् ॥ २९ ॥

**विष्वद्र्यञ्च्-देवद्र्यञ्चौ च, सर्वद्र्यञ्च्-प्रमुखास्तथा ।**
**अदमुयञ्चमुद्र्यञ्चमुमुयञ्चदद्र्यञ्चपि ॥ ३० ॥**

विष्वग् अञ्चति देवमञ्चति क्विप् "सर्वादिविष्वग्देवाद्०" ॥ ३ । २ । १२२ ॥ विष्वद्र्यञ्च् देवद्र्यञ्च् सर्वं पूर्ववत् ।

विष्वग्यङ्, विष्वग्यञ्चौ ५ । "अच् च०" ॥ २ । १ । १०४ ॥ विष्वद्रीचः, विष्वद्रीचा, विष्वग्यग्भ्याम्, विष्वग्यक्षु; विष्वग्यख्षु । पू० शसादौ विष्वग्यञ्चः । विष्वग्यञ्चा, विष्वग्यङ्भ्याम्, विष्वग्यङ्भि:; विष्वग्यङ्षु । स्त्रियाम्–विष्वद्रीची, पू० विष्वग्यञ्ची नदीवत् । क्लीबे–विष्वग्यक्–ग्, विष्वद्रीची, विष्वग्यञ्चि २ । देवग्यङ्, देवग्यञ्चौ ५ । देवद्रीचः; देवद्रीचा, देवग्यग्भ्याम् । देवग्यक्षु, देवग्यख्षु । पू० शसादौ देवग्यञ्चः, देवग्यञ्चा, देवग्यङ्भ्याम् । देवग्यङ्क्षु, देवग्यङ्षु, स्त्रियाम् देवद्रीची, पू० देवग्यञ्ची नदीवत् । क्ली० देवग्यक्–ग्, देवद्रीची, देवग्यञ्चि २ । सर्वमञ्चतीति "सर्वादिविष्वग्०" ॥ ३ । २ । १२२ ॥ सर्वग्यञ्च्–सर्वग्यङ्, सर्वग्यञ्चौ ५ । "अच् च्०" ॥ २ । १ । १०४ ॥ सर्वद्रीचः, सर्वग्यग्भ्याम् । सर्वग्यक्षु, सर्वग्यख्षु । पू० शसादौ सर्वग्यञ्चः, सर्वग्यञ्चा, सर्वग्यङ्भ्याम् सर्वग्यङ्क्षु, सर्वग्यङ्षु । स्त्रियाम्–सर्वद्रीची, पू० सर्वग्यञ्ची नदीवत् । क्लीबे सर्वग्यक्–ग्, सर्वद्रीची, सर्वग्यञ्चि २ । एवं यद्र्यञ्च्-एतद्र्यञ्च्-अन्यद्र्यञ्च्-मुख्याः । अमुमञ्चति "सर्वादिविष्वग्०" ॥ ३ । २ । १२२ ॥ वाऽद्रौ मत्वे, "मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ मपरवर्णस्य उत्वम्; तदपि मत्वम् ।

परतः केचिदिच्छन्ति, केचिदिच्छन्ति पूर्वतः ।
उभयोः केचिदिच्छन्ति, केचिदिच्छन्ति नोभयोः ॥ १ ॥

परतस्तावत् अदमुयञ्च्–अदमुयङ्, अदमुयञ्चौ ५ । "अच् च् प्राग्" ॥ २ । १ । १०४ ॥ "अदोमुमी" ॥ १ । २ । ३५ ॥ न सन्धिः अदमुईचः । केचिद् वत्वमपीच्छन्ति–अदम्वीचः, एवमग्रेऽपि । अदमुईचा, अदम्वीचा, अदमुयग्भ्याम्, अदमुयग्भिः । अदमुईचे । अदमुयक्षु, अदमुयख्षु । पू० शसादौ अदमुयञ्चः । अदमुयञ्चा अदमुयङ्भ्याम् अदमुयङ्भिः । अदमुयञ्चे । अदमुयङ्क्षु, अदमुयङ्षु । स्त्रियाम्–अदमुयञ्ची नदीवत् २ । क्लीबे–अदमुयक्–ग्, अदमुईची, अदम्वीची, अदमुयञ्चि २ । पूर्वतः–अमुग्यञ्च्-अमुग्यङ्, अमुग्यञ्चौ ५ । अमुद्रीचः, अमुद्रीचा, अमुग्यग्भ्याम् । अमुग्यक्षु, अमुग्यख्षु । पू० शसादौ अमुग्यञ्चः । अमुग्यञ्चा, अमुग्यङ्भ्याम् । अमुग्यङ्क्षु, अमुग्यङ्षु । स्त्रियाम्—अमुद्रीची, पू० अमुग्यञ्ची नदीवत् । क्लीबे–अमुग्यक्–ग्, अमुग्यञ्ची, अमुग्यञ्चि २ । उभयतोऽपि अमुमुयञ्च्-अमुमुयङ् अमुमुयञ्चौ ५ । "अदोमुमी" ॥ १ । २ । ३५ ॥ न अमुमुईचः केचित् सन्धिमिच्छन्ति अमुम्वीचः । अमुमुईचा, अमुम्वीचा, अमुमुयग्भ्याम्, अमुमुयग्भिः । अमुमुयक्षु, अमुमुयख्षु । पू० शसादौ अमुमुयञ्चः । अमुमुयञ्चा, अमुमुयङ्भ्याम्, अमुमुयङ्भिः । अमुमुयङ्क्षु, अमुमुयङ्षु । स्त्रियाम्–अमुमुईची, अमुम्वीची, पू० अमुमुयञ्ची नदीवत् । क्लीबे–अमुमुयक्, अमुमुयग् । अमुमुईची, अमुम्वीची, अमुमुयञ्चि २ । उभयतो निषेधः अदद्र्यञ्च्–अदद्र्यङ्, अदद्र्यञ्चौ ५ । अदद्रीचः । अदद्रीचा, अदद्र्यग्भ्याम्, अदद्र्यग्भिः, अदद्र्यक्षु, अदद्र्यख्षु । पू० शसादौ अदद्र्यञ्चः, अदद्र्यञ्चा, अदद्र्यङ्भ्याम्, अदद्र्यङ्भिः । अदद्र्यङ्क्षु, अदद्र्यङ्षु । स्त्रियाम्–अदद्रीची पू० अदद्र्यञ्ची नदीवत । क्लीबे–अदद्र्यक्, ग् अदद्रीची अदद्र्यञ्चि ॥ ३० ॥

**गोऽञ्च् पृथग् दृषदञ्च्-मुख्या, भिन्नाः प्राञ्चादयोऽर्चने ।**
**वाच्यलिङ्गाः समाश्छन्ताः, पुंसि जन्ता वणिज्-मुखाः ॥ ३१ ॥**

ग्राममञ्चति गच्छति पूजयति वा क्विप् "एदोतः पदान्ते०" ॥ १ । २ । २७ ॥ गोऽञ्च्-अत्र "स्वरे वाऽनक्षे" ॥ १ । २ । २९ ॥, "वाऽत्यसन्धिः" ॥ १ । २ । ३१ ॥ सूत्राभ्याम् रूप ३ गवाञ्च्-गोअञ्च्-"अञ्चोऽनर्चायाम्" ॥ ४ । २ । ४६ ॥ इत्यादि गवाङ्, गोअङ्; गोऽङ् । गवाञ्चौ, गोअञ्चौ, गोऽञ्चौ ५ । "अञ्चो०" ॥ ४ । २ । ४६ ॥ गवाचः, विसन्धिपक्षे "अच् च् प्राग्०" ॥ २ । १ । १०४ ॥ गोअचः, सन्धौ च गोऽचः । गवाचा, गोअचा, गोऽचा । गवाग्भ्याम्, गवाग्भिः, गोऽग्भिः । गवाचे, गोअचे, गोऽचे । एवमग्रे स्वरे । गवाक्षु, गोअक्षु, गोऽक्षु, गोऽख्षु ३ । पू० शसादौ गवाञ्चः, गोअञ्चः, गोऽञ्चः । गवाञ्चा, गोअञ्चा, गोऽञ्चा । गवाङ्भ्याम्, गोअङ्भ्याम्, गोऽङ्भ्याम् । गवाङ्भिः ३ । गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु, गोङ्षु ३ । स्त्रियाम्–गवाची, गोअची, गोऽची, पू० गवाञ्ची, गोअञ्ची, गोऽञ्ची नदीवत् । क्लीबे–गवाक्, गोअक्, गोऽक्, ग् ३ गवाची, गोअची, गोऽची, पू० गवाञ्चि, गोअञ्चि, गोऽञ्चि २ ॥ दृषदमञ्चति–दृषदञ्च्-दृषदङ्, दृषदञ्चौ ५ । "अच् च् प्राग्०" ॥ २ । १ । १०४ ॥ न दीर्घः, "अघोषे प्रथमो०" ॥ १ । ३ । ५० ॥, "तवर्गस्य०" ॥ १ । ३ । ६० ॥ दृषच्चः । दृषच्चा, दृषदग्भ्याम्, दृषदग्भिः । दृषच्चे । दृषच्चः २ । दृषदक्षु, ख्षु । पू० शसादौ दृषदञ्चः । दृषदङ्भ्याम्, दृषदङ्भिः, दृषदङ्क्षु, दृषदङ्षु । स्त्रियाम्–दृषच्ची, पू० दृषदञ्ची नदीवत् । क्लीबे–दृषदक्–ग्, दृषच्ची, दृषदञ्चि २ ॥ एव योषिदञ्च्-मुख्याः ॥ साधुमञ्चति–गच्छति–पूजयति वा साध्वञ्च्–साध्वङ् साध्वञ्चौ ५ । "अच् च्०" ॥ २ । १ । १०४ ॥ साधूचः । साधूचा, साध्वग्भ्याम् । साध्वक्षु, साध्वख्षु । पू० साध्वञ्चा, साध्वङ्भ्याम् । साध्वङ्क्षु, साध्वङ्षु स्त्रियाम्–साधूची, पू० साध्वञ्ची नदीवत् । क्लीबे–साध्वक्–ग्, साधूची साध्वञ्चि २, एव गुर्वञ्च्-मुख्याः ।

छन्ताः–शब्द पृच्छतीति "दिद्यद्०" ॥ ५ । २ । ८३ ॥ शब्दप्राच्छ्–"अनुनासिके च०" ॥ ४ । १ । १०८ ॥

छस्य द्वि'पाठात् च्छः श् "यजसृज०" ॥ २ । १ । ८७ ॥ श् ष्, "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ ड्, "विरामे वा" ॥ १ । ३ । ५१ ॥ शब्दप्राद्, शब्दप्राड्, शब्दप्राशौ, शब्दप्राशः । शब्दप्राशं, शब्दप्राशौ । शब्दप्राड्भ्याम् । शब्दप्राट्सु, ट्सु । स्त्रियामेवम् । क्लीबे-शब्दप्राद्-ड्, शब्दप्राशी, शब्दप्रांशि २ । कातन्त्रे-छः शोऽनित्यः, तेन शब्दप्राशौ, छौ शब्दप्राच्छः, शः । शब्दप्राच्छा, शा । व्यञ्जने द्वयोरपि सदृग् रूपम् । क्लीबे-शब्दप्राशी, शब्दप्राच्छी, शब्दप्रांशि, प्राञ्छि २ ॥

**जन्ताः** सिलुक् "चज कगम्" ॥ २ । १ । ८६ ॥ वणिक्-ग्, वणिजौ-स्वरे सन्धिः, वणिग्भ्याम्, वणिक्षु, वणिख्षु । एव क्ष्माभुज् ॥ २-५ ॥ ३१ ॥

**राज्-सम्राजौ समावृत्विज्, भिन्ना रुज्-स्रज्-मुखाः स्त्रियाम् ।**
**क्लीबे त्वसृज्-मुखा वाच्य,-लिङ्गा देवेज्-मुखाः समाः ॥ ३२ ॥**

"यजसृज०" ॥ २ । १ । ८७ ॥ राद्, राड्, राजौ । राड्भ्याम् । राट्सु, राठ्सु । एव सम्राज् । ऋतौ यजति ऋत्विज्-"चजः०" ॥ २ । १ । ८६ ॥ बाधक "यजसृज०" ॥ २ । १ । ८७ ॥, बाधक "ऋत्विज्०" ॥ २ । १ । ६९ ॥ इति गे ऋत्विग्-क् । अतो वणिग्वत् ॥ "चज.०" ॥ २ । १ । ८६ ॥ क् रुक्, ग् रुजौ रुजः । वणिग्वद् ॥ सृजतीति "ऋत्विज्०" ॥ २ । १ । ६९ ॥ इति स्रज्-गत्व च क् वणिग्वत् ॥ "अनतो लुप्" ॥ १ । ४ । ५९ ॥ "चजः कगम्" ॥ २ । १ । ८६ ॥ असृक्-ग्, असृजी, असृञ्जि । शसादौ "दन्तपाद०" ॥ २ । १ । १०१ ॥ इति असन्, "नि दीर्घ." ॥ १ । ४ । ८५ ॥ असानि, असृञ्जि । "अनोऽस्य" ॥ २ । १ । १०८ ॥ अस्ना, असृजा । असभ्याम्, "चज. कगम्" ॥ २ । १ । ८६ ॥ असृग्भ्याम् । असभिः, असृग्भि. । अस्ने, असृजे । अस्नि, असनि, असृजि । अससु, असृक्षु, असृख्षु । आदेशप्रक्रियां विना अन्येऽप्येवम् ॥ देव यजति क्विप् "यजादि०" ॥ ४ । १ । ७९ ॥ य्वृत् देवेज्-"यजसृज०" ॥ २ । १ । ८७ ॥ षे डे देवेट्, देवेड् । देवेजौ स्वरे सन्धिः । देवेड्भ्याम् । देवेट्सु, देवेठ्सु । स्त्रियामेवम् । क्लीबे-देवेद्-ड्, देवेजी देवेञ्जि २ । एव ऋजुसृज्-केशपरिमृज्-गिरिराज्-विभ्राज्-परिव्राज् ॥ २-६ ॥ ३२ ॥

**धानाभ्रस्ज् भेदभाक् तृष्णज्,-युज् बहूर्ज्-प्रमुखाः पृथक् ।**
**ञन्ता अन्ता टवर्गान्ता, वाच्यलिङ्गाः प्रकल्पिताः ॥ ३३ ॥**

धाना भृज्जतीति "ग्रहव्रश्च०" ॥ ४ । १ । ८४ ॥ य्वृत् धानाभ्रस्ज्-"सयोगस्य०" ॥ २ । १ । ८८ ॥ "यजसृज०" ॥ २ । १ । ८७ ॥ धानाभृद्-ड् । स्वरादौ "सस्य शषौ" ॥ १ । ३ । ६१ ॥ शे "तृतीय.०" ॥ १ । ३ । ४९ ॥ जे धानाभृज्जौ, धानाभृड्भ्याम् । धानाभृट्सु-ठ्सु । स्त्रियामेवम् । क्लीबे-धानाभृद्-ड्, धानाभृज्जी धानाभृञ्जि २ । तृष्यतीति तृष्णज्-"चज. कगम्" ॥ २ । १ । ८६ ॥ तृष्णक्-ग् । तृष्णजौ स्वरे सन्धिः । तृष्णग्भ्याम् । तृष्णक्षु, तृष्णख्षु । स्त्रियामेवम् । क्लीबे-तृष्णक्-ग्, तृष्णजी, तृष्णञ्जि २ । एव धृष्णोतीति-धृष्णज् । स्वपीतीति स्वप्नज् । युनक्तीति युज्- "युजोऽसमासे" ॥ १ । ४ । ७१ ॥ घुटि नोन्त , "पदस्य" ॥ २ । १ । ८१ ॥ "युजञ्च०" ॥ २ । १ । ७१ ॥ युङ्, युञ्जौ, युज' । युजा "चज' कगम्" ॥ २ । १ । ८६ ॥ युग्भ्याम् । युक्षु, युख्षु । स्त्रियामेवम् । क्लीबे युक्-ग्, युजी, युञ्जि २ । समासे तु न नोन्त.-अश्वयुक्-ग् । अश्वयुजौ स्वरे सन्धि. । अश्वयुग्भ्याम् । अश्वयुक्षु, ख्षु । स्त्रियामेवम् । क्लीबे-अश्वयुक्-ग्, अश्वयुजी "धुटा प्राक्" ॥ १ । ४ । ६६ ॥ अश्वयुञ्जि २ । अश्वयुज् मासि वाच्ये पुलिङ्ग । अन्यार्थे वाच्यलिङ्ग. । बहून् ऊर्जयतीति बहूर्ज्ज् "रात् सः" ॥ २ । १ । ९० ॥ इति नियमात् "पदस्य" ॥ २ । १ । ८९ ॥ इति न ज्लोप. । ततो "धुटो धुटि स्वे वा" ॥ १ । ३ । ४८ ॥ आद्यज्लोपे "चज. कगम्" ॥ २ । १ । ८६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ "र्होदर्हे०" ॥ १ । ३ । ३१ ॥ बहूर्क्क्, बहूर्ग्ग् । बहूर्ज्जौ-स्वरे सन्धिः । बहूर्ग्भ्याम् । बहूर्क्षु, बहूर्ख्षु । स्त्रियामेवम् । क्लीबे-बहूर्क्क्, बहूर्ग्ग्, बहूर्जी "र्लो वा" ॥ १ । ४ । ६७ ॥ वा ने बहूर्जि, बहूर्ञ्जि २ ॥ एव अर्ध भजते अर्धभाज्-निर्गतो रुजः निरुज् तृष्णज्वत् ॥ साधु मज्जतीति साधुमस्ज्-"सयोगस्य०" ॥ २ । १ । ८८ ॥, "चजः कगम्" ॥ २ । १ । ८६ ॥ साधुमक्-ग् । "सस्य शषौ" ॥ १ । ३ । ६१ ॥ शे, "तृतीयः०" ॥ १ । ३ । ४९ ॥ जे साधुमज्जौ । एव स्वरे सन्धिः । साधुमग्भ्याम् । साधुमक्षु, ख्षु । स्त्रियामेवम् । क्लीबे-साधुमक्-ग्, साधुमज्जी, साधुमञ्जि २ । शिष्य मर्जतीति शिष्यमर्ज्-"धुटस्तृतीय." ॥ २ । १ । ७६ ॥, "चजः कगम्" ॥ २ । १ । ८६ ॥ शिष्यमर्ग्-र्क् । शिष्यमर्जौ स्वरे सन्धिः । शिष्यमर्ग्भ्याम् । शिष्यमर्क्षु, र्ख्षु । स्त्रियामेवम् । क्लीबे-शिष्यमर्ग्-र्क्, शिष्यमर्जी "र्लो वा" ॥ १ । ४ । ६७ ॥ शिष्यमर्जि, शिष्यमर्ञ्जि २ ॥ जलमुब्जति जलोब्ज्-"पदस्य" ॥ २ । १ । ८९ ॥ "चज' कगम्" ॥ २ । १ । ८६ ॥ जलोक्-ग् । जलोब्जौ । जलोग्भ्याम् । जलोक्षु, जलोख्षु । स्त्रियामेवम् । क्लीबे-जलोक्-ग् जलोब्जी जलोब्जि २ ।

**ञन्ताः**-यदा लिखितो ञ् येन स लिखितञ् तदा कातन्त्रे-"चवर्ग०" ॥ २ । ३ । ४८ ॥ इति गत्व न स्यात् ।

-दृगादिकृतः साहचर्यात् चवर्गोऽपि कृदन्त एव ग्राह्यः । लिखितञ् । लिखितञ्जौ-स्वरे सन्धिः । लिखितञ्भ्याम् । लिखितञ्सु-ञ्ष्सु । स्त्रियामेवम् । क्लीबे-लिखितच्-ज्, लिखितञ्जी, लिखितञ्जि २ । व्याकरणे लिखितग्, क् ।

**ञन्ताः**-ज्ञातञ्-स्वरे अधुट्त्वात् व्यञ्जनेऽपि सन्धिः ज्ञातञ्, ज्ञातञौ । ज्ञातञ्भ्याम् । ज्ञातञ्सु । स्त्रियामेवम् । क्लीबे-ज्ञातञ् ज्ञातञी ज्ञातञि २ ।

**टन्ताः**-नाट्यनट्, ड् । नाट्यनटौ स्वरे सन्धिः । नाट्यनड्भ्याम् । नाट्यनट्सु-ट्सु । स्त्रियामेवम् । क्लीबे-नाट्यनट्-ड्, नाट्यनटी, नाट्यनण्टि २ ।

**ठन्ताः**-शास्त्रपठ्-शास्त्रपट्-ड् शास्त्रपठौ । शास्त्रपड्भ्याम् । शास्त्रपठ्सु-ट्सु । स्त्रियामेवम् । क्लीबे-शास्त्रपठ्, ड् शास्त्रपठी शास्त्रपण्ठि २ ।

पठितड्-लिखितढ् मुख्या डन्ताः ढन्ताश्च ज्ञेयाः ।

**णन्ताः**-सुगण्-प्रगुण्-सराण्-सवाण्-विष्वाण् इत्येते क्विबन्ताः । सिलोपे सुगण् । सुगणौ-स्वरे सन्धिः । सुगण्भ्याम् । सुपि "ङ्णोः कटावन्तौ शिटि नवा" ॥ १ । ३ । १७ ॥ सुगण्ट्सु, सुगण्सु । स्त्रियामेवम् । क्लीबे-सुगण् सुगणी-सुगणि २ । एवमन्ये ॥ २-७ ॥ ३३ ॥

**तन्ताः पुंसि मरुन्मुख्याः, स्त्रियां विद्युन्मुखाः समाः ।**
**क्लीबे जगन्मुखास्तत्र, यकृतः शकृतोऽन्तरम् ॥ ३४ ॥**

**तन्ताः**-मरुत्-विपश्चित्-नीवृत्-तनूनपात्-परभृत्-सुरजित् । मरुत्-द् । मरुतौ-स्वरे सन्धिः । मरुद्भ्याम् । मरुत्सु-थ्सु । विद्युत्-तडित्-योषित् । विद्युत्-द् । मरुत्वत् । "अनतो लुप्" ॥ १ । ४ । ५९ ॥ जगत्-द्, जगती, जगन्ति २ । अग्रे मरुत्वत् । एवं पृषत्-उदश्वित् । यकृत्-शकृतोः शसादौ "दन्तपाद०" ॥ २ । १ । १०१ ॥ इति यकन्, शकन् आदेशौ । यकृत्-द्, यकृती, यकृन्ति, यकानि २ । यकृता, यक्ना, यकृद्भ्याम्, यकभ्याम्, यकृद्भिः, यकभिः । यकृते, यक्ने । यकृतः, यक्नः २ । यकृति, यक्नि, यकनि; यकृत्सु, यकृथ्सु, यकसु । एवं शकृत् ॥ २-८ ॥ ३४ ॥

**वाच्यलिङ्गा महन्त्-मुख्याः, शन्तृङन्ताश्च सान्तराः ।**
**करिष्यन्त्-खजित्-कृतवन्त्, यावन्त्-इयन्त्-मुखास्तथा ॥ ३५ ॥**

अत्र सूत्रे कातन्त्राभिप्रायेण महत्-आद्याः शब्दा नोपान्त्या गृहीताः । व्याकरणे तु पश्चान्नागमः । महत्-बृहत्-आयुष्मत्-मुख्या मिथः सान्तरा । "ऋदुदितः" ॥ १ । ४ । ७० ॥ धुटिनोन्तः, "न्समहतोः" ॥ १ । ४ । ८६ ॥ शेषे घुटि "पदस्य" ॥ २ । १ । ८९ ॥ महान्, महान्तौ ५, महतः । महता, महद्भ्याम्, महद्भिः । महत्सु । आ० हे महन्!, हे महान्तौ!, हे महान्तः! । स्त्रियाम्-महती नदीवत् । क्लीबे-महत्-द्, महती महान्ति २ ॥ बृहत्-"ऋदुदितः" ॥ १ । ४ । ७० ॥ अत्वन्तत्वाभावात् "अभ्वादेः०" ॥ १ । ४ । ९० ॥ इति न दीर्घः, बृहन्, बृहन्तौ ५ । बृहतः । बृहता, बृहद्भ्याम् । बृहत्सु-थ्सु । आ० हे बृहन्! । स्त्रियाम्-बृहती नदीवत् । क्लीबे बृहत्-द्, बृहती, बृहन्ति २ ॥ आयुर्विद्यतेऽस्य आयुष्मत्-"ऋदुदितः" ॥ १ । ४ । ७० ॥, "अभ्वादेः०" ॥ १ । ४ । ९० ॥ दीर्घे, "पदस्य" ॥ २ । १ । ८९ ॥ आयुष्मान्, आयुष्मन्तौ ५, आयुष्मतः । आयुष्मता, आयुष्मद्भ्याम्, महत्वत् । आ० हे आयुष्मन्! । स्त्रियाम् आयुष्मती नदीवत् । क्लीबे-आयुष्मत्-द्, आयुष्मती, आयुष्मन्ति २ । एवं गोमत्-अग्निमत् । "मावर्णान्त०" ॥ २ । १ । ९४ ॥ इति धनवत् मुख्याः ॥ अन्येऽप्येवं हिमवत्-विद्युत्वत्-भास्वत्-विवस्वत्-उदन्वत्-नभस्वत् एते प्रायः पुल्लिङ्गाः । विवक्षया वाच्यलिङ्गाः । जाम्बवत्-हनूमत्-शब्दौ पुंस्येव । एतेऽपि आयुष्मत्वत् ॥

शत्रन्ताः भवत्-अदत्-दीव्यत्-सुन्वत्-तुदत्-तन्वत्-रुन्धत्-क्रुणत्-चोरयत्-मुख्या मिथः सान्तराः ॥ "ऋदुदितः" ॥ १ । ४ । ७० ॥ नोन्त, "अभ्वादेः०" ॥ १ । ४ । ९० ॥ न दीर्घे, "पदस्य" ॥ २ । १ । ८९ ॥ भवन्, भवन्तौ ५ । भवतः । भवता, भवद्भ्याम् । भवत्सु, भवथ्सु । स्त्रियाम्-ङ्या "श्यशवः" ॥ २ । १ । ११६ ॥ इति नित्यम् अतुरन्तो भवन्ती नदीवत् । क्लीबे-भवत्, भवती, भवन्ति २ । आ० एवम् । युष्मदर्थे सर्वादि-भवतु-शब्दो न शत्रन्तः, "ऋदुदितः" ॥ १ । ४ । ७० ॥ "अभ्वादेः०" ॥ १ । ४ । ९० ॥ भवान् । शेषं शत्रन्त-भवत्वत् । स्त्रियाम्-भवती नदीवत् ।

अत्तीति अदन् अदन्तौ अदन्त । भवत्वत् । स्त्रियामदती नदीवत् । क्लीबे-अदन्, अदती, अदन्ति २ । जक्षादि-पञ्चकम् जक्षत्-दरिद्रत्-जाग्रत्-चकासत्-अनुशासत् । अत्र "ऋदुदितः" ॥ १ । ४ । ७० ॥ घुटि नोन्तः, "अन्तो नो लुक्" ॥ ४ । २ । ९४ ॥ नलोपः, जक्षत्, जक्षद्, जक्षतौ जक्षत । जक्षतम्, जक्षतौ, जक्षतः । जक्षता, जक्षद्भ्याम् । जक्षत्सु, जक्षथ्सु । आ० हे जक्षत्! । स्त्रियाम्-जक्षती नदीवत् । क्लीबे-जक्षत्-द्, जक्षती "शौ वा" ॥ ४ । २ । ९५ ॥

वा नलोपे जक्षति, जक्षन्ति २ । आ० एवम् । दरिद्रातीति दरिद्रत् "श्नश्चातः" ॥ ४ । २ । ९६ ॥ आलोपः, दरिद्रत् इत्यादि सर्वं पूर्ववत् । स्त्रियाम्-दरिद्रती । क्लीबे-दरिद्रत्, दरिद्रती "शौ वा" ॥ ४ । २ । ९५ ॥ दरिद्रति, दरिद्रन्ति २ । एव जाग्रत् इत्यादि । स्त्रियाम्-जाग्रती । क्लीबे-जाग्रत्, जाग्रती, जाग्रति, जाग्रन्ति २ । चकासत् इत्यादि । स्त्रियाम्-चकासती । क्लीबे-चकासत्, चकासती, चकासति, चकासन्ति २ । अनुशासत् इत्यादि । स्त्रियाम्-अनुशासती । क्लीबे-अनुशासत्, अनुशासती, अनुशासति, न्ति २ ।

ह्वादयः-जुहोतीति शतृ "ह्वः शिति" ॥ ४ । १ । १२ ॥, "गहोर्जः" ॥ ४ । १ । ४० ॥, "ह्निणोरप्विति व्यौ" ॥ ४ । ३ । १५ ॥ जुह्वत्-"ऋदुदितः" ॥ १ । ४ । ७० "अन्तो नो लुक्" ॥ ४ । २ । ९४ ॥ जुह्वत्, जुह्वतौ, जुह्वतः । जुह्वतं तौ तः । जुह्वता, जुह्वद्भ्याम् । जुह्वत्सु, जुह्वथ्सु । आ० एवम् । स्त्रियाम्-जुह्वती । क्लीबे-जुह्वत्, जुह्वती "शौ वा" ॥ ४ । २ । ९५ ॥ जुह्वति-न्ति २ । आ० एवम् ॥ 'डुदांग्क् दाने' ददातीति द्वित्वादिके ददत्, ददतौ, ददतः । ददतम्, ददतौ, ददतः । ददता, ददद्भ्याम् । ददत्सु, ददथ्सु । आ० एवम् । स्त्रियाम्-ददती । क्लीबे-ददत्, ददती "शौ वा" ॥ ४ । २ । ९५ ॥ ददति-न्ति २ । आ० एवम् । एवं दधत्-बिभ्यत्-बिभ्रत्-मुख्या ददत्वत् ॥

मादयः मातीति "ऋदुदितः" ॥ १ । ४ । ७० ॥ मान् मान्तौ ५ । मातः । माता, माद्भ्याम् । मात्सु, माथ्सु । आ० एवम् । स्त्रियाम्-ङ्या "अवर्णादश्नोऽन्तो०" ॥ २ । १ । ११५ ॥ अतुः वाऽन्तो माती, मान्ती नदीवत् । क्लीबे-मात् "अवर्णादश्नोऽन्तो०" ॥ २ । १ । ११५ ॥ मान्ती, माती, मान्ति २ । आ० एवम् । यात्-वात्-स्नात् मुख्या ॥

दिवादयः-दीव्यतीति दीव्यत्-दीव्यन्, दीव्यन्तौ ५ । दीव्यता, दीव्यद्भ्याम् । स्त्रियाम्-ङ्यां "श्यशवः" ॥ २ । १ । ११६ ॥ दीव्यन्ती नदीवत् । क्लीबे-दीव्यत् "श्यशवः" ॥ २ । १ । ११६ ॥ दीव्यन्ती, दीव्यन्ति २ । एव सीव्यत्-मुख्याः ।

स्वादयः-'षुगृट्' सुनोतीति सुन्वन्, सुन्वतौ ५ । सुन्वतः इत्यादि । स्त्रियाम्-सुन्वती नदीवत् । क्लीबे-सुन्वत्, सुन्वती, सुन्वन्ति २ ।

**तुदादयः**-तुदतीति तुदत-तुदन्, तुदन्तौ ५ इत्यादि । स्त्रियाम्-"अवर्णादश्नोऽन्तो०" ॥ २ । १ । ११५ ॥ तुदन्ती, तुदती नदीवत् । क्लीबे तुदत् "अवर्णादश्नो०" ॥ २ । १ । ११५ ॥ तुदन्ती, तुदती, तुदन्ति २ ।

**तनादयः**-'तनूयी' तनोतीति तन्वन् इत्यादि । स्त्रियाम्-तन्वती नदीवत् । क्लीबे-तन्वत्, तन्वती, तन्वन्ति २ ।

**रुधादयः**-'रुधृपी' रुणद्धीति रुन्धन्, रुन्धन्तौ ५ । रुन्धतः इत्यादि । स्त्रियाम्-रुन्धती नदीवत् । क्लीबे रुन्धत् रुन्धती रुन्धन्ति २ ।

**क्र्यादयः**-'डुक्रींग्श्' क्रीणातीति "श्नश्चातः" ॥ ४ । २ । ९६ ॥ क्रीणन्, क्रीणन्तौ इत्यादि । स्त्रियाम्-क्रीणती नदीवत् । क्लीबे क्रीणत्, क्रीणती, क्रीणन्ति २ ।

**चुरादयः**-'चुरण्' चोरयतीति चोरयन्, चोरयन्तौ इत्यादि । स्त्रियाम्-ङ्यां "श्यशवः" ॥ २ । १ । ११६ ॥ चोरयन्ती नदीवत् । क्लीबे-चोरयत् "श्यशवः" ॥ २ । १ । ११६ ॥ चोरयन्ती, चोरयन्ति २ । आ० एवम् ।

करिष्यत्, कारयिष्यत् । सूत्रे खजित्, अत्र शत्रुं जयतीति शत्रुजित्, "ह्रस्वस्य त. पित्कृति" ॥ ४ । ४ । ११३ ॥ शत्रुजितौ इत्यादि स्वरे व्यञ्जने च सन्धि. । स्त्रियामप्येवम् । क्लीबे शत्रुजित्, शत्रुजिती, शत्रुजिन्ति २ । आ० एवम् । एवमन्ये । करोति स्म कृतवत्-"ऋदुदितः" ॥ १ । ४ । ७० ॥, "अभ्वादे.०" ॥ १ । ४ । ९० ॥ कृतवान्, कृतवन्तौ, कृतवन्तः ५ । कृतवतः । कृतवता, कृतवद्भ्याम् । कृतवत्सु, कृतवथ्सु । आ० हे कृतवन् ! । स्त्रियाम्-कृतवती नदीवत् । क्लीबे-कृतवत्, कृतवती, कृतवन्ति २ । एवं चितवत्, धृतवत्-मुख्याः । यत् परिमाणमस्य "यत्तदेतदो डावादिः" ॥ ७ । १ । १४९ ॥ यावत्-"ऋदुदितः" ॥ १ । ४ । ७० । "अभ्वादेः०" ॥ १ । ४ । ९० ॥ यावान्, यावन्तौ ५ । यावतः । यावता, यावद्भ्याम् । यावत्सु, यावथ्सु । स्त्रियाम्-यावती नदीवत् । क्लीबे-यावत्, यावती, यावन्ति २ । एव तावत्-एतावत् । इद परिमाणमस्य इयत् पूर्ववत् इयान् इयन्तौ ५ इयतः इत्यादि । स्त्रियाम्-इयती नदीवत् । क्लीबे-इयत्, इयती, इयन्ति २ । एव कियत् ॥ २-९ ॥ ३५ ॥

**थन्ता मता वाच्यलिङ्गा-स्तक्रमथ्-प्रमुखाः समाः ।**
**दन्ताः क्रव्याद्-मुखाः पुंसि, स्त्रियां तुल्या दृषद्-मुखाः ॥ ३६ ॥**

**थन्ताः**-'मन्थश्' तक्र मथ्नातीति "नो व्यञ्जनस्यानुदित." ॥ ४ । २ । ४५ ॥ तक्रमथ्-सिलोपे "धुटस्तृतीय." ॥ २ । १ । ७६ ॥, "विरामे वा" ॥ १ । ३ । ५१ ॥ तक्रमत्-द्, तक्रमथौ-स्वरे सन्धि. । तक्रमद्भ्याम् । तक्रमत्सु,

तक्रमथ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे–तक्रमत्–द्, तक्रमथी, तक्र-मन्थि २ । एवमग्निमथ्-समुद्रमथ्–नीलीमथ्–मुख्याः ।

**दन्ताः**–क्रव्याद्–त्, क्रव्यादौ इत्यादि । क्रव्याद्भ्याम् । क्रव्यात्सु, क्रव्याथ्सु । एवं शास्त्रविदादयः । दृषद्–त्, दृषदौ–स्वरे सन्धिः । दृषद्भ्याम् । दृषत्सु–थ्सु । आ० एवम् ॥ एवं विपद्-आपद्-परिषद्-संविद्-प्रतिपद्-शरद्–मुख्याः ॥ २–१० ॥ ३६ ॥

**वाच्यलिङ्गास्तत्त्वविदा,-द्या व्याघ्रपाद्-मुखा अपि ।**
**धन्ताः स्त्रियां समिध्-मुख्या, वाच्यलिङ्गास्तु संमताः ॥ ३७ ॥**

तत्त्ववित्–द् इत्यादि पुंस्त्रियोः दृषद्वत् । क्लीबे–तत्त्ववित्–द्, तत्त्व-विदी तत्त्वविन्दि २ । एवं शास्त्रविद्–बहुसंपद्–काष्ठभिदाद्याः । व्याघ्रस्येव पादावस्य "पात् पादस्याहस्त्यादेः" ॥ ७ । ३ । १४८ ॥ व्याघ्रपात्–द्, व्याघ्रपादौ ५ । "यस्वरे पादः पदणिक्यघुटि" ॥ २ । १ । १०२ ॥ व्याघ्रपाद्भ्याम्, व्याघ्रपाद्भिः । व्याघ्रपदे । व्याघ्रपात्सु, व्याघ्रपाथ्सु । आ० एवम् । स्त्रियाम्–वा ङ्यां "यस्वरे पादः०" ॥ २ । १ । १०२ ॥ व्याघ्रपदी नदीवत् । पक्षे व्याघ्रपाद् पूर्ववत् । क्लीबे–व्याघ्रपाद्–त्, "यस्वरे०" ॥ २ । १ । १०२ ॥ व्याघ्रपदी, व्याघ्रपान्दि २ । आ० एवम् । एवमुपमाने सिंहपाद्–उष्ट्रपाद् । सङ्ख्यायामेकपाद्-द्विपाद्-त्रिपाद् । सुपूर्वसुपाद्-मुख्याः ।

**धन्ताः**–"धुटस्तृतीयः" ॥ २ । १ । ७६ ॥, "विरामे वा" ॥ १ । ३ । ५१ ॥ समित्–द्, समिधौ–इत्यादि स्वरे सन्धिः । "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ समिद्भ्याम्, समिद्भिः । "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० ॥ समित्सु, समिथ्सु । आ० एवम् ॥ एवं क्षुध्-युध्-क्रुध्-मुख्याः ॥ २–११ ॥ ३७ ॥

**मृगाविध्-मर्माविध्-विक्रुध्,-प्रमुखा ज्ञानबुध् तथा ।**
**नन्ताः पुंस्यात्मनो मुख्या, राजन्-मुख्याश्च सान्तराः ॥ ३८ ॥**

मृगान् विध्यतीति क्विप् "ज्याव्यधः क्ङिति" ॥ ४ । १ । ८१ ॥ य्वृत्, "गतिकारकस्य नहिवृतिवृषिव्यधि०" ॥ ३ । २ । ८५ ॥ प्राग् दीर्घो मृगाविध्–पुंसि स्त्रियां च मृगावित् इति समिध्वत् । क्लीबे–मृगावित्–द्, मृगाविधी, मृगाविन्धि २ । आ० एवम् ॥ एव मर्माविध्-विक्रुध्-सुसमिध्-मुख्याः ॥ ज्ञान बुध्यते ज्ञानबुध्-सिलोपे "गडदबादेः" ॥ २ । १ । ७७ ॥ ज्ञानभुत्–द् । ज्ञानबुधौ–एव स्वरे सन्धिः । व्यञ्जने–ज्ञानभुद्भ्याम् । ज्ञानभुत्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे–ज्ञानभुत्–द्, ज्ञानबुधी, ज्ञानबुन्धि २ । आ० एवम् ॥

**नन्ताः**–सिलोपे "नि दीर्घः" ॥ १ । ४ । ८५ ॥ शेषे घुटि, "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ आत्मा, आत्मानौ ५ । "न वमन्तसंयोगात्" ॥ २ । १ । १११ ॥ अलोपो न, आत्मनः । आत्मना । स्यादिविधावसत्त्वात् आत्मभ्याम्, आत्मभिः, आत्मसु इत्यादौ–दीर्घत्वैस्त्वैत्वान्यकारान्तत्वाभावाद् न भवन्ति । आत्मने, आत्मनः २ । आ० "नि दीर्घः" ॥ १ । ४ । ८५ ॥ इति न, "नाऽऽमन्त्र्ये" ॥ २ । १ । ९२ ॥ नलोपाभावः हे आत्मन्!, हे आत्मानौ!, हे आत्मानः! । एवम् अध्वन्-यज्वन्-ब्रह्मन्-अश्मन्-मुख्या वमन्तसंयोगान्नान्ताः । "नि दीर्घः" ॥ १ । ४ । ८५ ॥, "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ राजा राजानौ ५ । अघुट्स्वरे "अनोऽस्य" ॥ २ । १ । १०८ ॥ अलुक्, "तवर्गस्य श्चवर्ग०" ॥ १ । ३ । ६० ॥ न् ञ् राज्ञः । राज्ञा, राजभ्याम्, राजभिः । राज्ञे । "ईङौ वा" ॥ २ । १ । १०९ ॥ राज्ञि, राजनि । आ० हे राजन्!, । एव मूर्धन्-तक्षन्-मज्जन्-उक्षन्-मुख्या अवमन्तसंयोगान्नान्ताः ॥ २–१२ ॥ ३८ ॥

**भेदः श्व-युव-मघोनामिन्-, हन्-पूषार्यमार्वताम् ।**
**विशेषः प्रतिदीव्नोऽपि, स्त्रियां सीमन्-मुखाः समाः ॥ ३९ ॥**

श्वा श्वानौ ५ । अघुट्स्वरे "श्वन्-" ॥ २ । १ । १०६ ॥ इति वं उः शुनः । शुना, श्वभ्याम्, श्वभिः; शुने इत्यादि । श्वसु । आ० हे श्वन्! युवा युवानौ ५ । "श्वन्युवन्०" ॥ २ । १ । १०६ ॥ इति उत्वे यूनः । यूना, युवभ्याम्, युवभिः, यूने । युवसु । आ० हे युवन्!, मघवा, मघवानौ ५ । "श्वन्युवन्मघोनः०" ॥ २ । १ । १०६ ॥ इति उत्वे मघोनः । मघोना मघवभ्याम् मघवभिः । मघोनः २ । मघवसु । आ० हे मघवन्!, स्त्रियाम्–"श्वन्०" ॥ २ । १ । १०६ ॥ इति वस्य उत्वे शुनी, यूनी, मघोनी नदीवत् । कातन्त्रे–मघवन्शब्दस्य वा मघवत् आदेशः । व्याकरणे तु पृथक् उदित् मघवत्-शब्दः–सि "ऋदुदितः" ॥ १ । ४ । ७० ॥, "अभ्वादेः०" ॥ १ । ४ । ९० ॥ मघवान् मघवन्तौ ५, मघवतः । मघवता, मघवद्भ्याम्, मघवद्भिः । मघवते । मघवत्सु, मघवथ्सु । आ० हे मघवन्-न्तौ–न्तः । स्त्रियाम्–मघवती नदीवत् ।

इन-शशोऽस्यास्तीति इन् शशिन्–"इन्हन्पूषा०" ॥ १ । ४ । ८७ ॥, "नाम्नो नः०" ॥ २ । १ । ९१ ॥ शशी ।

शिस्योरिति नियमात् न "नि दीर्घः" ॥ १ । ४ । ८५ ॥ शशिनौ, शशिनः–स्वरे सन्धिः । व्यञ्जने–"नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ शशिभ्याम्, शशिभिः । शशिषु । आ० शेषसेरभावात् न दीर्घः "नाऽऽमन्त्र्ये" ॥ २ । १ । ९२ ॥ हे शशिन् !, हे शशिनौ !, हे शशिनः !; एव मन्त्रिन्-वाजिन्-कञ्चकिन्-दण्डिन्-मायाविन्-तेजस्विन्-तपस्विन्-महस्विन्, तथा परमेष्ठिन्; तथा तिष्ठतीत्येवशीलः स्थायिन् इति तद्धिते नन्ता उणादिके नन्ताः कृदि नन्ताश्च ज्ञेयाः ।

वृत्र हतवान् क्विप् वृत्रहन्–"इन्हन्पूषा०" ॥ १ । ४ । ८७ ॥ वृत्रहा, शिस्योरिति नियमात् न दीर्घः "रषृ०" ॥ २ । ३ । ६३ ॥ वृत्रहणौ ५ ।, "अनोऽस्य" ॥ २ । १ । १०८ ॥ हनो ह्नो घ्नः" ॥ २ । १ । ११२ ॥, वृत्रघ्नः । वृत्रघ्ना "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ वृत्रहभ्याम्, वृत्रहभिः । वृत्रघ्ने । वृत्रघ्न. २ । "ईङौ वा" ॥ २ । १ । १०९ ॥ वृत्रहणि, वृत्रघ्नि । वृत्रहसु । आ० हे वृत्रहन् !, हे वृत्रहणौ !, हे वृत्रहणः !, एव ब्रह्महन्-भ्रूणहन् गोत्रहन्-अहिहन्-मधुहन्-मुख्या हन्नन्ताः । "इन् हन्पूषा०" ॥ १ । ४ । ८७ ॥ नियमात् पूषणौ ५ । "अनोऽस्य" ॥ २ । १ । १०८ ॥ "रषृवर्णात्–" ॥ २ । ३ । ६३ ॥ पूष्णः । पूषभ्याम्, पूषभिः । पूष्णे । पूष्णः २ । पूषणि, पूष्णि, पूषसु । आ० हे पूषन्, एवमर्यमन् । अर्वा अर्वाणौ अर्वाण., आत्मन्वत् । स्त्रियाम्–अर्वती नदीवत्, कातन्त्रे विशेषः–"अर्वन्नर्वन्तिरसावनञ्" ॥ २ । ३ । २२ इति इर्वा अर्वन्तः ५ । अर्वतः । अर्वता, अर्वद्भ्याम् इत्याद्यग्रे महत्वत् । स्त्रियाम्–अर्वती । नञि तु अनर्वा, अनर्वाणौ, अनर्वाणः ५ । अनर्वणः आत्मन्वत् । प्रतिदीव्यतीति प्रतिदिवन्–"नि दीर्घः" ॥ १ । ४ । ८५ ॥ प्रतिदिवानौ ५ । "अनोऽस्य" ॥ २ । १ । १०८ ॥ असद्विधौ स्वरादेशस्य लोपस्य स्थानिवद्-भावप्रतिषेधात् "भ्वादेर्नामिन.०" ॥ २ । १ । ६३ ॥ प्रतिदीव्नः वस्य ऊटि तु स्थानित्वमस्य प्रतिदीव्ना, प्रतिदिवभ्याम्, प्रतिदिवभि., प्रतिदीव्ने । प्रतिदीव्नः २ । प्रतिदीव्नि, प्रतिदिवनि प्रतिदिवसु । आ० हे प्रतिदिवन् !, प्रतिदिवानौ !, प्रतिदिवान. !, "मनः" ॥ २ । ४ । १४ ॥ इति ङीनै सिलोपे "नि दीर्घः" ॥ १ । ४ । ८५ ॥ सीमा, सीमानौ ५ । "अनोऽस्य" ॥ २ । १ । १०८ ॥ सीम्नः । सीम्ना, सीमभ्याम्, सीमभिः । सीम्ने । सीम्नि, सीमनि, सीमसु । आ० हे सीमन् । पक्षे "ताभ्यां वाऽऽप् डित्" ॥ २ । ४ । १५ ॥ इति सीमा, सीमे, सीमाः इत्यादि श्रद्धावत् । एव पामन् पक्षे पामा । एव-मन्ये स्त्रीलिङ्गा मन्नन्ता. ॥ २–१३ ॥ ३९ ॥

**क्लीबे सामन्-मुख्यास्तुल्याः, पर्व-जन्मादयः पृथक् ।**
**अह्नो भेदो वाच्यलिङ्गा, बहुराजन्-मुखा मताः ॥ ४० ॥**

"अनतो लुप्" ॥ १ । ४ । ५९ ॥ "नाम्नो नोऽनह्नः" ॥ २ । १ । ९१ ॥ साम "ईङौ वा" ॥ २ । १ । १०९ ॥ साम्नी, सामनी, सामानि २ । साम्ना, सामभ्याम्, सामभिः । साम्ने । साम्नि, सामनि, सामसु । आ० "क्लीबे वा" ॥ २ । १ । ९३ ॥ हे साम–सामन् !, हे साम्नी !, सामनी !, सामानि ! ॥ एव दामन्-धामन्-व्योमन् नामन्-मुख्या अवमन्तसयोगान्नान्ता. । सिलोपे नलोपे पर्व, पर्वणी न वमन्तसयोगात्" ॥ २ । १ । १११ ॥ अलुक् पर्वाणि २ । पर्वणा, पर्वभ्याम्, पर्वभि । पर्वणि पर्वसु । आ० हे पर्व !, पर्वन् । शोभनानि पर्वाणि यस्या यष्टेरिति स्त्रीत्वे डाप्-प्रत्यये सुपर्वा श्रद्धावत् । एव वर्मन्-नर्मन्-जन्मन्-सद्मन्-मुख्या वमन्तसयोगान्नान्ताः । "अनतो लुप्" ॥ १ । ४ । ५९ ॥, "रो लुप्यरि" ॥ २ । १ । ७५ ॥ अहः अह्नी, अहनी, अहानि २ । "अनोऽस्य" ॥ २ । १ । १०८ ॥ अह्ना "अह्नः" ॥ २ । १ । ७४ ॥ रुः अहोभ्याम्, अहोभि. । अह्न' २ । अह्नि, अहनि, अहसु । आ० हे अहः !, । बहुराजन्-बहुतक्षन्-उद्दामन्-सुवृत्रहन्-भूरिधामन्-इत्याद्या अवमन्तसयोगान्नाता । बहवो राजानो यस्मिन् देशे स बहुराजा, बहुराजानौ इत्यादि पूर्वराजन्वत् । स्त्रियाम्–बहवो राजानो यस्यां पृथ्व्याम् अत्र "अनो वा" ॥ २ । ४ । ११ ॥, "ताभ्यां वाऽऽप् डित्" ॥ २ । ४ । १५ ॥ इति सूत्र २ ङीडाप् विकल्पाभ्या सौ बहुराज्ञी, बहुराजा, बहुराजन् पृथ्वी क्रमात्, नदीश्रद्धा–पूर्वराजन्शब्दवत् । एव बहुतक्ष्णी, बहुतक्षा, बहुतक्षन् । उद्दाम्नी, उद्दामा, उद्दामन् वडवा । सुवृत्रघ्नी, सुवृत्रहा, सुवृत्रहन् पूः । भूरिधाम्नी, भूरिधामा, भूरिधामन् विद्या । क्लीबे–बहुराज बहुराजनी, बहुराज्ञी, बहुराजानि २ । आ० हे बहुराज !, बहुराजन् । एव प्राया अन्येऽप्यूह्या अवमन्तसयोगान्नान्ता. । सुपर्वन्-मेरुदृश्वन्-राजकृत्वन्-राजयुध्वन्-सुशर्मन्-धृतवर्मन्-सुकर्मन् । शोभन पर्व यस्य स पुंसि सुपर्वा सुपर्वाणौ ५ । सुपर्वण. । सुपर्वणा, सुपर्वभ्याम्, सुपर्वसु । आ० हे सुपर्वन् !, स्त्रियाम्–"नोपान्त्यवतः" ॥ २ । ४ । १३ ॥ इति ङीनिषेधे "ताभ्यां वाऽऽप्०" ॥ २ । ४ । १५ ॥ इति वा डापि सुपर्वा, सुपर्वन्, श्रद्धावत् पक्षे सुपर्वन्वत् । क्लीबे–सुपर्व !, सुपर्वणी सुपर्वाणि २ । आ० हे सुपर्व !, सुपर्वन् । एवमन्ये । मेरु दृष्टवान् । सह युध्यते स्म, राजानं युध्यते स्म । सहयुध्वा । राजयुध्वा अन्तर्भूतणिगर्थ. सकर्मक' राजान योधितवान् इत्यर्थ. । सह कृतवान् राजान कृतवान् सहकृत्वा राजकृत्वा क्वनिप् सर्वत्र । स्त्रियाम् मेरुदृश्वा, मेरुदृश्वन् । सुशर्मा । एव सर्वे । दण्डोऽस्यास्ति दण्डिन् पुंसि शशिवत् । स्त्रियाम्–दण्डिनी नदीवत्, क्लीबे–दण्डि दण्डिनी "इन्हन्०" ॥ १ । ४ । ८७ ॥ दीर्घो दण्डीनि २ । शेष शशिवत् ।

आ० हे दण्डिन् । एव ग्राहिन्-स्थायिन्-भाविन्-ध्वाङ्क्षराविन्-उष्ट्रक्रोशिन्-मुख्याः । तथा "वरस्येति गम्यादिः" ॥ ५ । ३ । १ ॥ गमिन्—आगामिन् । सर्वं द्रष्टु शीलमस्येति णिनि सर्वदर्शिन्-मुख्याश्च ।

अथ वन्प्रत्ययान्ताः—सुष्ठु दधाति—धयति वा, सुष्ठु पिबति, "मन्वन्क्वनिप्विच् क्वचित्" ॥ ५ । १ । १४७ ॥ इति सूत्रेण यथालक्ष्यमेते प्रत्ययाः स्युः—अत्र क्वनिप् "ईर्व्यञ्जनेऽयपि" ॥ ४ । ३ । ९७ ॥ सुधीवन्—सुपीवन् । भूरि ददाति भूरिदावन्, घृतं पिबति घृतपावन्, वन् अत्र क्विदभावान्न ईः । 'ओणृ' ओणतीति "मन्वन्०" ॥ ५ । १ । १४७ ॥, "वन्याङ् पञ्चमस्य" ॥ ४ । २ । ६५ ॥ अवावन् । अग्रे गच्छति विजायते वन् । प्रातरेति क्वनिप् "वन्याङ् पञ्चमस्य" ॥ ४ । २ । ६५ ॥ अग्रेगावन्, विजावन्, "ह्रस्वस्य तः०" ॥ ४ । ४ । ११३ ॥ प्रातरित्वन् । पुंसि सुधीवा सुधीवानौ ५ । "अनोऽस्य" ॥ २ । १ । १०८ ॥ सुधीव्नः । सुधीव्ना, सुधीवभ्याम्, सुधीवभिः । सुधीव्नि, सुधीवनि, सुधीवसु । आ० हे सुधीवन् !, हे सुधीवानौ !, हे सुधीवानः ! । एव पुंसि सुपीवन्मुख्याः । प्रातरित्वन्शब्दस्य "न वमन्त०" ॥ २ । १ । १११ ॥ अघुट्स्वरे न अलोपे स्त्रियाम्—"ण्स्वराघोषाद् वनो रश्च" ॥ २ । ४ । ४ ॥ ङी नो रश्च सुधीवरी—सुपीवरी-भूरिदावरी-घृतपीवरी-प्रातरित्वरी-सहकृत्वरी-अवावरी मेरुदृश्वरी-मुख्याः सर्वे नदीवत् । घोषवत्परवन्प्रत्ययान्न ङी सहयुध्वा, यज्वा । स्त्रियाम्-पुनः "वा बहुव्रीहेः" ॥ २ । ४ । ५ ॥ इति बहवो धीवानो यस्याः बहुधीवरी, बहुधीवा स्त्री । प्रियावावरी, प्रियावावा स्त्री । क्लीबे—सुधीव सुधीव्नी, सुधीवनी, सुधीवानि २ । आ० हे सुधीव !, सुधीवन् ! । प्रशाम्यतीति क्विप् "अहन्पञ्चमस्य०" ॥ ४ । १ । १०७ ॥, "मो नो म्वोश्च" ॥ २ । १ । ६७ ॥ प्रशान् नत्वस्यासत्त्वात् नलोपाभावः । प्रशामौ प्रशामः—स्वरे सन्धिः । प्रशान्भ्याम्, प्रशान्भिः । प्रशान्सु । आ० हे प्रशान् !, प्रशामौ !, प्रशामः ! । स्त्रियामेवम् । क्लीबे—प्रशान् प्रशामी, प्रशामि २ । आ० एवम् । एव प्रतान् प्रदान्-आवान्-मुख्याः ॥ २–१४ ॥ ४० ॥

**पन्तोऽप् स्त्रियां वाच्यलिङ्गाः, शुच्यप्-मण्डपलिप् मुखाः ।**
**फन्ता बन्ता वाच्यलिङ्गा, अरितुफ्-पुत्रचुम्ब्-मुखाः ॥ ४१ ॥**

**पन्ताः**—अप् बहुवचनान्तः । "अपः" ॥ १ । ४ । ८८ ॥ शेषघुटि दीर्घ आपः । अप. । "अपोऽद्भे" ॥ २ । १ । ४ ॥ अद्भिः । अद्भ्यः २ । अपाम् । अप्सु । आ० हे आपः !, शुचय आपो यत्र "अप." ॥ १ । ४ । ८८ ॥ शुच्यप्—ब्, शुच्यापौ ५ । शुच्यपः । शुच्यपा, शुच्यद्भ्याम्, शुच्यद्भिः । शुच्यपे । शुच्यप्सु !, फ्सु । आ० हे शुच्यप् !, शुच्यपौ !, शुच्यपः ! । स्त्रियामेवम् । क्लीबे—शुच्यप्, शुच्यपी "नि वा" ॥ १ । ४ । ८९ ॥ शुच्याम्पि, शुच्यम्पि २ ॥ एव बह्वाम्पि, बह्वम्पि २ । आ० एवम् । एवं स्वप्-मुख्या. । मण्डप लिम्पति, क्विप् मण्डपलि,—प् पौ—इति स्वरे सन्धि । "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ मण्डपलिब्भ्याम् । मण्डपलिप्सु—लिफ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे—मण्डपलिप्-ब्, मण्डपलिपी, मण्डपलिम्पि २ । आ० एवम् । एव अक्षरलुप्-मन्त्रजप्-मुख्याः ॥

**फन्ताः**—अरिं तुम्फति-अरितुफ्—ब् । अरितुफौ-स्वरे सन्धिः । अरितुब्भ्याम् । अरितुप्सु—फ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे—अरितुफ्, ब् अरितुफी अरितुम्फि २ । एव माल्यगुफ्-मुख्याः ॥

**बन्ताः**—पुत्रं चुम्बति-पुत्रचुम्ब्, प् । पुत्रचुम्बौ-स्वरे सन्धि. । पुत्रचुम्ब्भ्याम् । पुत्रचुम्प्सु, फ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे—पुत्रचुम्प्—ब्, पुत्रचुम्बी, पुत्रचुम्पि २ ॥ २–१५ ॥ ४१ ॥

**भन्ताः स्त्रियां ककुभ्-मुख्या, वाच्यलिङ्गा विदभ्-मुखाः ।**
**मन्ता यन्ता वाच्यलिङ्गाः, प्राप्तशमव्ययादयः ॥ ४२ ॥**

**भन्ताः**—ककुप्—ब् । ककुभौ—स्वरे सन्धिः । ककुब्भ्याम् । ककुप्सु—फ्सु । आ० एवम् । विदभ्नोति क्विप् विदभ्—सिलोपे "गडदबादे.०" ॥ २ । १ । ७७ ॥ विधप्—ब् । विदभौ स्वरे सन्धिः । विधब्भ्याम् । विधप्सु, विधफ्सु । आ० हे विधप्—ब् ! । स्त्रियामेवम् । क्लीबे—विधप्—ब् विदभी विदम्भि २ । आ० एवम् । गर्दभमाचष्टे णिज् गर्दभयतीति क्विप्, "णेरनिटि" ॥ ४ । ३ । ८३ ॥ सिलोपे, "गडदबादे." ॥ २ । १ । ७७ ॥ गर्धप्—ब् । गर्दभौ—स्वरे सन्धिः । गर्धब्भ्याम्, गर्धब्भिः । गर्धप्सु—फ्सु । आ० हे गर्धप् !, स्त्रियामेवम् । क्लीबे—गर्धप्—ब्, गर्दभी, गर्दम्भि २ । कृतानुष्टुभ्—कृतानुष्टुप्—ब् । कृतानुष्टुभौ-स्वरे सन्धि. । कृतानुष्टुब्भ्याम् । कृतानुष्टुप्सु—फ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे—कृतानुष्टुप्—ब् कृतानुष्टुभी, कृतानुष्टुम्भि २ । एव दृष्टककुभ्-मुख्या. ।

**मन्ताः**—प्राप्तशम्, प्राप्तशमौ । स्वरे सन्धिः । प्राप्तशम्भ्याम् । प्राप्तशम्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे—प्राप्तशम्, प्राप्तशमी, प्राप्तशमि २ ॥ मन्तमव्ययम्—नक्तम्—तूष्णीम्—सम् तत्र पदसंज्ञार्थो विभक्ति' ।

**यन्ताः**—अव्ययमाचष्टे णिज् अव्ययतीति क्विप् सिलोपे अव्यय् । अव्ययौ—स्वरे सन्धि. । अव्यय्भ्याम् । अव्यय्सु । स्त्रियामेवम् । क्लीबे—अव्यय्, अव्ययी, अव्ययि २ । एवमन्ये ॥ २–१६ ॥ ४२ ॥

**रन्ताः स्त्रियां गिर्-धुर्-मुख्या, वाच्यलिङ्गाः सुगिर्-मुखाः ।**
**तथा लन्ता विमल्-तुल्या, वन्ता दिव्-प्रमुखाः स्त्रियाम् ॥ ४३ ॥**

रन्ताः—सिलोपे "पदान्ते" ॥ २ । १ । ६४ ॥ गीः । गिरौ-स्वरे सन्धिः । गीर्भ्याम्, गीर्भिः । "अरोः सुपि रः" ॥ १ । ३ । ५७ ॥ षत्वे च गीर्षु । आ० एवम् ॥ धूः, धुरौ इत्यादि गिर्वत् ॥ एवं पुर्-मुख्याः ॥ द्वार-द्वाः द्वारौ-स्वरे सन्धिः । द्वार्भ्याम् । द्वार्षु । वार्-शब्दं केचित् स्त्रीलिङ्गमिच्छन्ति, तन्मते-वाः वारौ द्वारवत् । अन्ये तु क्लीबं तन्मते-वाः वारी, वारि २ । सुष्ठु गीर्यस्येति पुंस्त्रियोः पूर्ववत् । क्लीबे-सुगीः, सुगिरी, सुगिरि २ ।

लन्ताः—विमलमाचष्टे विमलयतीति विमल्-पुंस्त्रियोः सर्वत्र सन्धिः विमल्, विमलौ, विमल्भ्याम् । विमल्षु । क्लीबे-विमल्, विमली, विमलि २ । आ० एवम् । एवं धवल्-उज्ज्वल्-पठितहल्-मुख्याः ॥

वन्ताः—"दिव औः सौ" ॥ २ । १ । ११७ ॥ द्यौः । दिवौ दिवः-स्वरे सन्धिः । "उः पदान्तेऽनूत्" ॥ २ । १ । ११८ ॥ द्युभ्याम् । द्युषु । आ० एवम् । कातन्त्रे-"वाऽम्याः" ॥ २ । २ । २७ ॥ द्याम्, दिवम् ॥ २-१७ ॥ ४३ ॥

**वाच्यलिङ्गाः सुदिव्-प्रायाः,शन्ता विश् पुंसि तु स्त्रियाम् ।**
**दिश्-समा वाच्यलिङ्गा, नश्-जीवनश्-दृष्टदिश्-समाः ॥ ४४ ॥**

शोभना द्यौर्यत्र पुंस्त्रियोः पूर्ववत् । क्लीबे-सुद्यु, सुदिवी, सुदिवि २ । आ० एवम् । एवं विमलदिव्-अतिदिव्-मुख्याः ।

शन्ताः—"यजसृज०" ॥ २ । १ । ८७ ॥, "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ विट्-ड्, विशौ-स्वरे सन्धिः । विड्भ्याम् । विट्सु, विठ्सु । आ० एवम् ॥ "ऋत्विज्-दिश्०" ॥ २ । १ । ६९ ॥ दिक्-ग्, दिशौ-स्वरे सन्धिः । दिग्भ्याम्, दिग्भिः । दिक्षु-ख्षु । आ० एवम् । एवं दृश्-मुख्याः । नश्यतीति नश्-"नशो वा" ॥ २ । १ । ७० ॥ नक्-ग्, पक्षे "यजसृज०" ॥ २ । १ । ८७ ॥ नट्-ड् । नशौ-स्वरे सन्धिः । नग्भ्याम्, नड्भ्याम् । नक्षु, नख्षु, नट्सु, नठ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-नक्, नग्, नट्, नड् नशी नशि २ । एवं जीवनश् । दृष्टदिक्-ग्, दृष्टदिशौ इत्यादि पुंस्त्रियोः दिश्वत् । क्लीबे-दृष्टदिक्-ग्, दृष्टदिशी, दृष्टदिशि २ । एवं दल स्पृशति दलस्पृश्-"ऋत्विज्०" ॥ २ । १ । ६९ ॥ दलस्पृक्-ग् । दलस्पृशौ स्वरे सन्धिः । दलस्पृग्भ्याम् । दलस्पृक्षु-ख्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे दलस्पृक्-ग्, दलस्पृशी, दलस्पृशि २ । आ० एवम् । एवं सदृश्-तादृश्-युष्मादृश्-भवादृश्-मुख्याः ॥ २-१८ ॥ ४४ ॥

**षन्ता द्विषादयः पुंसि, प्रावृष्-प्रभृतयः स्त्रियाम् ।**
**वाच्यलिङ्गाः सुवर्णमुष्-मुख्याः सजुष् दधृष् तथा ॥ ४५ ॥**

षन्ताः—"धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ द्विट्-ड् । द्विषौ-स्वरे सन्धिः । द्विड्भ्याम् । द्विट्सु, द्विठ्सु । आ० एवम् । "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ प्रावृट्-ड् । प्रावृषौ-स्वरे सन्धिः । प्रावृड्भ्याम् द्विष्-वत् । एवं त्विष्-रुष्-विप्रुष्-तृष्-मुष्-मुख्याः । 'शासूक्' आशासनमाशीः, "क्रुत्सम्पदादिभ्यः०" ॥ ५ । ३ । ११४ ॥ क्विप्, "आङः" ॥ ४ । ४ । १२० ॥, "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ षत्वे आशिष् सिलोपः षत्वस्यासत्त्वात्, "सो रुः" ॥ २ । १ । ७२ ॥ "पदान्ते" ॥ २ । १ । ६४ ॥, "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ आशीः । आशिषः-स्वरे सन्धिः । षत्वस्यासत्त्वात् "सो रुः" ॥ २ । १ । ७२ ॥ आशीर्भ्याम् । "सो रुः" ॥ २ । १ । ७२ ॥ षस्य रत्वे, "शषसे०" ॥ १ । ३ । ६ ॥ आशीष्षु, "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ आशीःषु । कातन्त्रे-आशीर्षु । आ० एवम् । सुवर्णमुट्-ड् । सुवर्णमुषौ-स्वरे सन्धिः । सुवर्णमुड्भ्याम् । सुवर्णमुट्सु-ठ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-सुवर्णमुट्-ड्, सुवर्णमुषी, सुवर्णमुषि । आ० एवम् । सिलोपे "सजुषः" ॥ २ । १ । ७३ ॥ ष् र, "पदान्ते" ॥ २ । १ । ६४ ॥ सजूः । सजुषौ-स्वरे सन्धिः । सजूर्भ्याम्, सजूर्भिः । सजूष्षु, सजूःषु । कातन्त्रे-सजूर्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे-सजूः, सजुषी, सजुषि २ । धृष्णोतीति "ऋत्विज्०" ॥ २ । १ । ६९ ॥ इति सूत्रनिर्देशाद् द्वित्वं दधृष्-अनेनैव पदान्ते गत्वं च दधृक्-ग् । दधृषौ-स्वरे सन्धिः । दधृग्भ्याम्, भिः । दधृक्षु-ख्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे-दधृक्-ग्, दधृषी, दधृषि ॥ २-१९ ४५ ॥

**सन्ता वेधो-मुखाः पुंसि, दोस्-पुंसोरन्तरं मतम् ।**
**उशनः-पुरुदंशोऽने,-हसां भेदः स्त्रियां पुनः ॥ ४६ ॥**

सन्ताः—"अभ्वादेः०" ॥ १ । ४ । ९० ॥ वेधाः । वेधसौ-स्वरे सन्धिः । वेधोभ्याम्, वेधोभिः । वेधस्सु, वेधःसु । आ० दीर्घो न हे वेधः!, हे वेधसौ!, हे वेधसः! । एवं चन्द्रमस्-उच्चैःश्रवस्-जातवेदस्-हिरण्यरेतस्-पुरोधस्-मुख्याः । दोस्-षत्वे दोष् षत्वासत्त्वात्, "सो रुः" ॥ २ । १ । ७२ ॥ एवमग्रे दोः, दोषौ ५ । शसादौ "दन्तपाद०"

॥ २ । १ । १०१ ॥ इत्यादिना दोषन् "अनोऽस्य" ॥ २ । १ । १०८ ॥ दोष्णः । दोषा, दोष्णा, दोषभ्याम्, दोर्भ्याम्, दोषभिः, दोर्भिः । दोष्णे, दोषे इत्यादि । दोषनि, दोष्णि, दोषि, दोषसु पूर्ववत् "सो रुः" ॥ २ । १ । ७२ ॥ "शषसे०" ॥ १ । ३ । ६ ॥ दोष्षु, दोःषु । आ० एवम् । दोस्-शब्दः क्लीबेऽप्यस्ति तत्र-दोः दोषी दोंषि २ । "दन्तपाद०" ॥ २ । १ । १०१ ॥ इति नन्तपक्षे दोषाणि । आ० एवम् । कातन्त्रे पुमन्स्-शब्दः । व्याकरणे तु पुम्सु उदित्-घुटि "पुम्सोः पुमन्स्" ॥ १ । ४ । ७३ ॥ "न्सूमहतोः" ॥ १ । ४ । ८६ ॥ शेषघुटि दीर्घः "पदस्य" ॥ २ । १ । ८९ ॥ पुमान् "शिड्हेऽनुस्वारः" ॥ १ । ३ । ४० ॥ पुमांसौ ५ । पुंसः । पुंसा "पदस्य" ॥ २ । १ । ८९ ॥ स्लोपे "तौ मुमो व्यञ्जने स्वौ" ॥ १ । ३ । १४ ॥ पुम्भ्याम्, पुम्भिः । पुंसे इत्यादि । पुंसि, पुंसु । आ० हे पुमन्, पुमांसौ, पुमांसः ॥ "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ "डित्यन्त्यस्वरादेः" ॥ २ । १ । ११४ ॥ उशना । उशनसौ-स्वरे सन्धिः । "सो रुः" ॥ २ । १ । ७२ ॥ "घोषवति" ॥ १ । ३ । २१ ॥ उशनोभ्याम्, उशनोभिः । उशनस्सु, उशनःसु । आ० "वोशनसः०" ॥ १ । ४ । ८० ॥ हे उशनः !, हे उशनन् !; हे उशनसौ !, हे उशनसः ! । एवं पुरुदशस्-अनेहस् पर आ० हे पुरुदशः, हे पुरुदशसौ, हे पुरुदशसः । हे अनेहः, अनेहसौ, अनेहसः । उशना शुक्रः । पुरुदंशा इन्द्रः । अनेहा कालः ॥२-२०॥

**सुमनोऽप्सरो-भास्-मुख्याः, क्लीबे सन्ता महो-मुखाः ।**
**इसन्ताः सर्पिः-प्रमुखा, उसन्ताश्च वपुर्निभाः ॥ ४७ ॥**

"अभ्वादेः०" ॥ १ । ४ । ९० ॥ सुमनाः । सुमनसौ इत्यादि वेधस्वत् ॥ अप्सरस् बहुवचनान्तः । केऽपि सर्ववचनं मन्यन्ते "अभ्वादेः०" ॥ १ । ४ । ९० ॥ अप्सराः । अप्सरसौ वेधस्वत् । आ० हे सुमनः । हे अप्सरः ॥ सिलोपे "सो रुः" ॥ २ । १ । ७२ ॥ "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ भाः । भासौ-स्वरे सन्धिः । "अवर्णभोभगो०" ॥ १ । ३ । २२ ॥ भाभ्याम् भाभिः । भास्सु, भाःसु । आ० एवम् ॥ "अनतोलुप्" ॥ १ । ४ । ५९ ॥ सिलोपात् "अभ्वादेः०" ॥ १ । ४ । ९० ॥ न दीर्घः । एव सर्वत्र । महः, महसी, महांसि २ । शेषं वेधस्वत् । आ० एवम् । एव तेजस्-पयस्-तपस्-वासस्-श्रोतस्-ओजस्-शिरस्-अयस्-रक्षस्-सरस्-एनस्-तमस् रेतस्-मनस्-वचस्-छन्दस्-श्रेयस्-मुख्या असन्ताः ॥ सर्पिस्-सर्पिः सर्पिषी शिः "धुटां प्राक्" ॥ १ । ४ । ६६ ॥ षत्वं च ततः षत्वस्यासत्त्वात् "न्सूमहतोः" ॥ १ । ४ । ८६ ॥ दीर्घः सर्पींषि २ । सर्पिषा षत्वासत्वाद् रः सर्पिर्भ्याम् सर्पिर्भिः । सर्पिषे इत्यादि पूर्ववत् । "सो रुः" ॥ २ । १ । ७२ ॥ सर्पिष्षु, सर्पिःषु । आ० एवम् । एव बर्हिस्-शोचिस् रोचिस्-अर्चिस् हविस्-ज्योतिस्-छर्दिस्-मुख्या इसन्ताः ॥ वपुस्-वपुः वपुषी वपूंषि २ । वपुषा पूर्ववत्, वपुर्भ्याम्, वपुर्भिः । वपुषे । वपुषः २ । इत्यादि पूर्ववत् । वपुष्षु, वपुःषु । आ० एवम् । एवं धनुस्-आयुस्-चक्षुस्-जनुस् यजुस्-मुख्या उसन्ताः ॥ २-२१ ॥

**वाच्यलिङ्गा बहुविधा, तस्थिवस्-प्रमुखा मताः ।**
**हन्ताः पुल्लिङ्गास्तुरासाह्-पृष्ठवाह्-सदृशा मताः ॥ ४८ ॥**

कातन्त्रे तस्थिवन्स् । व्याकरणे तु 'स्था' तस्थौ "तत्र क्वसुकानौ तद्वत्" ॥ ५ । २ । २ ॥ द्वित्वादिक "घसेक-स्वरातः क्वसोः" ॥ ४ । ४ । ८२ ॥ इट् "इडेत्पुसि चातो लुक्" ॥ ४ । ३ । ९४ ॥ तस्थिवस्-सिलुक् "ऋदुदितः" ॥ १ । ४ । ७० ॥ "न्सूमहतो" ॥ १ । ४ । ८६ ॥ "पदस्य" ॥ २ । १ । ८९ ॥ तस्थिवान् तस्थिवांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ अघुट्स्वरे सद् अपि क्वसु उष् तस्थुषः । तस्थुषा "स्रसूध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थुषे । तस्थुषः २ इत्यादि । "स्रसूध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० तस्थिवत्सु, "शिट्याद्यस०" ॥ १ । ३ । ५९ ॥ तस्थिवथ्सु । आ० हे तस्थिवन् । स्त्रियाम्-तस्थुषी नदीवत् । क्लीबे-'स्रसूध्वस्' ॥ २ । १ । ६८ ॥ तस्थिवत्, द् तस्थुषी तस्थिवांसि २ । आ० एवम् । एव जग्मिवस्-जघ्निवस्-पेचिवस्-शकिवस्-प्रायाः ॥ बभूवस्-बभूवान् बभूवांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ "धातोरिवर्ण०" ॥ २ । १ । ५० ॥ "भुवो वः परोक्षा०" ॥ ४ । २ । ४३ ॥ बभूवुषः । बभूवुषा "स्रसूध्वंस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवद्भ्याम् बभूवद्भिः । बभूवुषे । बभूवुषः २ इत्यादि । "स्रसूध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवत्सु, थ्सु । आ० हे बभूवन् । स्त्रियाम् बभूवुषी नदीवत् । क्लीबे-"स्रसूध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवत्, द् बभूवुषी बभूवांसि २ । एवंविधा अन्येऽप्येवम् ॥ वेत्तीति "वा वेत्तेः क्वसुः" ॥ ५ । २ । २२ ॥ विद्वस्-विद्वान् विद्वांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ विदुषः । विदुषा "स्रसूध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ विद्वद्भ्याम् विद्वद्भिः । विदुषे इत्यादि । विद्वत्सु, विद्वथ्सु । आ० हे विद्वन् । स्त्रियाम्-विदुषी नदीवत् । क्लीबे-विद्वत्, द् विदुषी विद्वांसि २ । आ० एवम् ॥ 'स्रंसूङ्' उखया स्रसते क्विप् "नो व्यञ्जनस०" ॥ ४ । २ । ४५ ॥ उखास्रस्-"स्रंसूध्वंस्०"

**रन्ताः स्त्रियां गिर्-धुर्-मुख्या, वाच्यलिङ्गाः सुगिर्-मुखाः ।**
**तथा लन्ता विमल्-तुल्या, वन्ता दिव्-प्रमुखाः स्त्रियाम् ॥ ४३ ॥**

रन्ताः–सिलोपे "पदान्ते" ॥ २ । १ । ६४ ॥ गीः । गिरौ-स्वरे सन्धिः । गीर्भ्याम्, गीर्भिः । "अरोः सुपि रः" ॥ १ । ३ । ५७ ॥ पत्वे च गीर्षु । आ० एवम् ॥ धूः, धुरौ इत्यादि गिर्वत् ॥ एव पुर-मुख्याः ॥ द्वार-द्वाः द्वारौ–स्वरे सन्धिः । द्वार्भ्याम् । द्वार्षु । वार्-शब्द केचित् स्त्रीलिङ्गमिच्छन्ति, तन्मते–वाः वारौ द्वार्वत् । अन्ये तु क्लीबं तन्मते–वाः वारी, वारि २ । सुष्ठु गीर्यस्येति पुंस्त्रियोः पूर्ववत् । क्लीबे–सुगीः, सुगिरी, सुगिरि २ ।

लन्ताः–विमलमाचष्टे विमलयतीति विमल्–पुंस्त्रियोः सर्वत्र सन्धिः विमल्, विमलौ, विमल्भ्याम् । विमल्सु । क्लीबे–विमल्, विमली, विमलि २ । आ० एवम् । एव धवल्–उज्ज्वल्-पठितहल्-मुख्याः ॥

वन्ताः–"दिव औः सौ" ॥ २ । १ । ११७ ॥ द्यौः । दिवौ दिवः–स्वरे सन्धिः । "उः पदान्तेऽनूत्" ॥ २ । १ । ११८ ॥ द्युभ्याम् । द्युषु । आ० एवम् । कातन्त्रे–"वाऽम्याः" ॥ २ । २ । २७ ॥ द्याम्, दिवम् ॥ २–१७ ॥ ४३ ॥

**वाच्यलिङ्गाः सुदिव्-प्रायाः,शन्ता विश् पुंसि तु स्त्रियाम् ।**
**दिश्-समा वाच्यलिङ्गा, नश्-जीवनश्-दृष्टदिश्-समाः ॥ ४४ ॥**

शोभना द्यौर्यत्र पुंस्त्रियोः पूर्ववत् । क्लीबे–सुद्यु, सुदिवी, सुदिवि २ । आ० एवम् । एव विमलदिव्-अतिदिव्-मुख्याः ।

**शन्ताः**–"यजसृज०" ॥ २ । १ । ८७ ॥, "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ विट्–ड्, विशौ–स्वरे सन्धिः । विड्भ्याम् । विट्सु, विट्त्सु । आ० एवम् ॥ "ऋत्विज्-दिश्०" ॥ २ । १ । ६९ ॥ दिक्–ग्, दिशौ–स्वरे सन्धिः । दिग्भ्याम्, दिग्भिः । दिक्षु–ख्षु । आ० एवम् । एवं दृश्-मुख्याः । नश्यतीति नश्–"नशो वा" ॥ २ । १ । ७० ॥ नक्–ग्, पक्षे "यजसृज०" ॥ २ । १ । ८७ ॥ नट्–ड् । नशौ–स्वरे सन्धिः । नग्भ्याम्, नड्भ्याम् । नक्षु, नख्षु, नट्सु, नट्त्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-नक्, नग्, नट्, नड् नशी नशि २ । एव जीवनश् । दृष्टदिक्–ग्, दृष्टदिशौ इत्यादि पुंस्त्रियोः दिश्वत् । क्लीबे–दृष्टदिक्–ग्, दृष्टदिशी, दृष्टदिशि २ । एव दलं स्पृशति दलस्पृश्–"ऋत्विज्०" ॥ २ । १ । ६९ ॥ दलस्पृक्–ग् । दलस्पृशौ स्वरे सन्धिः । दलस्पृग्भ्याम् । दलस्पृक्षु–ख्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे दलस्पृक्–ग्, दलस्पृशी, दलस्पृशि २ । आ० एवम् । एव सदृश्-तादृश्-युष्मादृश्-भवादृश्-मुख्याः ॥ २–१८ ॥ ४४ ॥

**षन्ता द्विषादयः पुंसि, प्रावृष्-प्रभृतयः स्त्रियाम् ।**
**वाच्यलिङ्गाः सुवर्णमुष्-मुख्याः सजुष् दधृष् तथा ॥ ४५ ॥**

**षन्ताः**–"धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ द्विट्–ड् । द्विषौ-स्वरे सन्धिः । द्विड्भ्याम् । द्विट्सु, द्विट्त्सु । आ० एवम् । "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ प्रावृट्–ड् । प्रावृषौ- स्वरे सन्धिः । प्रावृड्भ्याम् द्विष्-वत् । एव त्विष् रुष्-विप्रुष्-तृष्-मुष्-मुख्याः । 'शासूक्' आशासनमाशीः, "क्रुत्सम्पदादिभ्यः०" ॥ ५ । ३ । ११४ ॥ क्विप्, "आङः" ॥ ४ । ४ । १२० ॥, "नाम्यन्तस्था०" ॥ २ । ३ । १५ ॥ षत्वे आशिष् सिलोपः षत्वस्यासत्त्वात्, "सो रुः" ॥ २ । १ । ७२ ॥ "पदान्ते" ॥ २ । १ । ६४ ॥, "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ आशीः । आशिषः–स्वरे सन्धिः । षत्वस्यासत्त्वात् "सो रुः" ॥ २ । १ । ७२ ॥ आशीर्भ्याम् । "सो रुः" ॥ २ । १ । ७२ ॥ षस्य रत्वे, "शषसे०" ॥ १ । ३ । ६ ॥ आशीष्षु, "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ आशीःषु । कातन्त्रे–आशीर्षु । आ० एवम् । सुवर्णमुट्–ड् । सुवर्णमुषौ–स्वरे सन्धिः । सुवर्णमुड्भ्याम् । सुवर्णमुट्सु–ट्त्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे–सुवर्णमुट्–ड्, सुवर्णमुषी, सुवर्णमुषि । आ० एवम् । सिलोपे "सजुषः" ॥ २ । १ । ७३ ॥ ष् र, "पदान्ते" ॥ २ । १ । ६४ ॥ सजूः । सजुषौ–स्वरे सन्धिः । सजूर्भ्याम्, सजूर्भिः । सजूष्षु, सजूःषु । कातन्त्रे-सजूर्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे–सजूः, सजुषी, सजूंषि २ । धृष्णोतीति "ऋत्विज्०" ॥ २ । १ । ६९ ॥ इति सूत्रनिर्देशाद् द्वित्व दधृष्-अनेनैव पदान्ते गत्व च दधृक्–ग् । दधृषौ–स्वरे सन्धिः । दधृग्भ्याम्, भिः । दधृक्षु–ख्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे-दधृक्–ग्, दधृषी, दधृंषि ॥ २–१९ ४५ ॥

॥ २ । १ । १०१ ॥ इत्यादिना दोषन् "अनोऽस्य" ॥ २ । १ । १०८ ॥ दोष्णः । दोषा, दोष्णा, दोषभ्याम्, दोर्भ्याम्, दोषभिः, दोर्भिः । दोष्णे, दोषे इत्यादि । दोषनि, दोष्णि, दोषि, दोषसु पूर्ववत् "सो रुः" ॥ २ । १ । ७२ ॥ "शषसे०" ॥ १ । ३ । ६ ॥ दोष्षु, दोःषु । आ० एवम् । दोस्-शब्दः क्लीबेऽप्यस्ति तत्र-दोः दोषी दोंषि २ । "दन्तपाद०" ॥ २ । १ । १०१ ॥ इति नन्तपक्षे दोषाणि । आ० एवम् । कातन्त्रे पुमन्स् शब्दः । व्याकरणे तु पुम्सु उदित्-घुटि "पुम्सोः पुमन्स्" ॥ १ । ४ । ७३ ॥ "न्सूमहतोः" ॥ १ । ४ । ८६ ॥ शेषघुटि दीर्घः "पदस्य" ॥ २ । १ । ८९ ॥ पुमान् "शिड्हेऽनुस्वारः" ॥ १ । ३ । ४० ॥ पुमांसौ ५ । पुंसः । पुंसा "पदस्य" ॥ २ । १ । ८९ ॥ सूलोपे "तौ मुमो व्यञ्जने स्वौ" ॥ १ । ३ । १४ ॥ पुम्भ्याम्, पुम्भिः । पुंसे इत्यादि । पुंसि, पुंसु । आ० हे पुमन्, पुमांसौ, पुमांसः ॥ "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ "डित्यन्त्यस्वरादेः" ॥ २ । १ । ११४ ॥ उशना । उशनसौ-स्वरे सन्धिः । "सो रुः" ॥ २ । १ । ७२ ॥ "घोषवति" ॥ १ । ३ । २१ ॥ उशनोभ्याम्, उशनोभिः । उशनस्सु, उशनःसु । आ० "वोशनसः०" ॥ १ । ४ । ८० ॥ हे उशनः !, हे उशनन् !, हे उशनसौ !, हे उशनसः ! । एवं पुरुदंशस्-अनेहस् पर आ० हे पुरुदंशः, हे पुरुदंशसौ, हे पुरुदंशसः । हे अनेहः, अनेहसौ, अनेहसः । उशना शुक्रः । पुरुदंशा इन्द्रः । अनेहा कालः ॥२-२०॥

**सुमनोऽप्सरो-भास्-मुख्याः, क्लीबे सन्ता महो-मुखाः ।**
**इसन्ताः सर्पिः-प्रमुखा, उसन्ताश्च वपुर्निभाः ॥ ४७ ॥**

"अभ्वादेः०" ॥ १ । ४ । ९० ॥ सुमनाः । सुमनसौ इत्यादि वेधस्वत् ॥ अप्सरस् बहुवचनान्तः । केऽपि सर्ववचनं मन्यन्ते "अभ्वादेः०" ॥ १ । ४ । ९० ॥ अप्सराः । अप्सरसौ वेधस्वत् । आ० हे सुमनः । हे अप्सरः ॥ सिलोपे "सो रुः" ॥ २ । १ । ७२ ॥ "रः पदान्ते०" ॥ १ । ३ । ५३ ॥ भाः । भासौ-स्वरे सन्धिः । "अवर्णभोभगो०" ॥ १ । ३ । २२ ॥ भाभ्याम् भाभिः । भास्सु, भाःसु । आ० एवम् ॥ "अनतोलुप्" ॥ १ । ४ । ५९ ॥ सिलोपात् "अभ्वादेः०" ॥ १ । ४ । ९० ॥ न दीर्घः । एव सर्वत्र । महः, महसी, महांसि २ । शेष वेधस्वत् । आ० एवम् । एव तेजस्-पयस्-तपस्-वासस्-श्रोतस्-ओजस्-शिरस्-अयस्-रक्षस्-सरस्-एनस्-तमस् रेतस्-मनस्-वचस्-छन्दस्-श्रेयस्-मुख्या असन्ताः ॥ सर्पिस्-सर्पिः सर्पिषी शिः "धुटा प्राक्" ॥ १ । ४ । ६६ ॥ षत्व च ततः षत्वस्यासत्वात् "न्सूमहतोः" ॥ १ । ४ । ८६ ॥ दीर्घः सर्पींषि २ । सर्पिषा षत्वासत्वाद् रः सर्पिर्भ्याम् सर्पिर्भिः । सर्पिषे इत्यादि पूर्ववत् । "सो रुः" ॥ २ । १ । ७२ ॥ सर्पिष्षु, सर्पिःषु । आ० एवम् । एव बर्हिस्-शोचिस् रोचिस्-अर्चिस्-हविस्-ज्योतिस्-छर्दिस्-मुख्या इसन्ताः ॥ वपुस्-वपुः वपुषी वपूंषि २ । वपुषा पूर्ववत्, वपुर्भ्याम्, वपुर्भिः । वपुषे । वपुषः २ । इत्यादि पूर्ववत् । वपुष्षु, वपुःषु । आ० एवम् । एवं धनुस्-आयुस्-चक्षुस्-जनुस् यजुस्-मुख्या उसन्ताः ॥ २-२१ ॥

**वाच्यलिङ्गा बहुविधा, तस्थिवस्-प्रमुखा मताः ।**
**हन्ताः पुल्लिङ्गास्तुरासाह्-पृष्ठवाह्-सदृशा मताः ॥ ४८ ॥**

कातन्त्रे तस्थिवन्स् । व्याकरणे तु 'स्था' तस्थौ "तत्र क्वसुकानौ तद्वत्" ॥ ५ । २ । २ ॥ द्वित्वादिक "घसेक-स्वरातः क्वसोः" ॥ ४ । ४ । ८२ ॥ इद् "इडेत्पुसि चातो लुक्" ॥ ४ । ३ । ९४ ॥ तस्थिवस्-सिलुक् "ऋदुदितः" ॥ १ । ४ । ७० ॥ "न्सूमहतोः" ॥ १ । ४ । ८६ ॥ "पदस्य" ॥ २ । १ । ८९ ॥ तस्थिवान् तस्थिवांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ अघुट्स्वरे सद् अपि क्वसु उष् तस्थुषः । तस्थुषा "स्रसुध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ तस्थिवद्भ्याम् तस्थिवद्भिः । तस्थुषे । तस्थुषः २ इत्यादि । "स्रसुध्वंस्क्रस्०" ॥ २ । १ । ६८ ॥ "अघोषे प्रथमोऽशिटः" ॥ १ । ३ । ५० तस्थिवत्सु, "शिट्याद्यस्०" ॥ १ । ३ । ५९ ॥ तस्थिवथ्सु । आ० हे तस्थिवन् । स्त्रियाम्-तस्थुषी नदीवत् । क्लीबे-'स्रसुध्वस्' ॥ २ । १ । ६८ ॥ तस्थिवत्, द् तस्थुषी तस्थिवांसि २ । आ० एवम् । एव जग्मिवस्-जघ्निवस्-पेचिवस्-शकिवस्-प्रायाः ॥ बभूवस्-बभूवान् बभूवांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ "धातोरिवर्ण०" ॥ २ । १ । ५० ॥ "भुवो व. परोक्षा०" ॥ ४ । २ । ४३ ॥ बभूवुष. । बभूवुषा "स्रसुध्वंस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवद्भ्याम् बभूवद्भिः । बभूवुषे । बभूवुषः २ इत्यादि । "स्रसुध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवत्सु, थ्सु । आ० हे बभूवन् । स्त्रियाम् बभूवुषी नदीवत् । क्लीबे-"स्रसुध्वस्क्रस्०" ॥ २ । १ । ६८ ॥ बभूवत्, द् बभूवुषी बभूवांसि २ । एवंविधा अन्येऽप्येवम् ॥ वेत्तीति "वा वेत्तेः क्वसुः" ॥ ५ । २ । २२ ॥ विद्वस्-विद्वान् विद्वांसौ ५ । "क्वसुष् मतौ च" ॥ २ । १ । १०५ ॥ विदुषः । विदुषा "स्रसुध्वंस्क्रस्०" ॥ २ । १ । ६८ ॥ विद्वद्भ्याम् विद्वद्भि. । विदुषे इत्यादि । विद्वत्सु, विद्वथ्सु । आ० हे विद्वन् । स्त्रियाम्-विदुषी नदीवत् । क्लीबे-विद्वत्, द् विदुषी विद्वांसि २ । आ० एवम् ॥ 'संसूङ्' उखया स्रसते क्विप् "नो व्यञ्जनस्य०" ॥ ४ । २ । ४५ ॥ उखास्रस्-"स्रसुध्वंस्०"

॥ २ । १ । ६८ ॥ उखास्रत्, द् । उखास्रसौ-स्वरे सन्धिः । उखास्रद्भ्याम् उखास्रद्भिः । उखास्रत्सु, थ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-उखास्रत्, द् उखास्रसी उखास्रंसि २ । आमन्त्रणे एवम् ॥ पर्णानि ध्वसते क्विप् "नो व्यञ्जनस्य०" ॥ ४ । २ । ४५ ॥ पर्णध्वस्-"स्रस्ध्वस्०" ॥ २ । १ । ६८ ॥ पर्णध्वत्, द् इत्यादि उखास्रस्वत् ॥ श्रेयस् उदित् "ऋदुदित." ॥ १ । ४ । ७० ॥ "न्स्महतोः" ॥ १ । ४ । ८६ ॥ "पदस्य" ॥ २ । १ । ८९ ॥ श्रेयान् अत्र सयोगान्तलोपस्य परे कार्येऽसत्त्वात् "नाम्नोऽनह्न." ॥ २ । १ । ९१ ॥ इति नलोपो न स्यात् । स्यादिविधौ चासत्त्वात् अत्वसन्तत्वादिलक्षणो दीर्घ. स्यात् । एव भवान् इत्यादिषु । श्रेयासौ ५ । श्रेयस. । श्रेयसा, श्रेयोभ्याम्, श्रेयोभिः । श्रेयस्सु । आ० हे श्रेयन् । स्त्रियां श्रेयसी नदीवत् । क्लीबे-श्रेय , श्रेयसी, श्रेयांसि २ । आ० एवम् । एव गरीयस्-लघीयस्-साधीयस्-कनीयस्-यवीयस्-क्षेपीयस्-क्षोदीयस् स्थेयस्-स्फेयस् वरीयस्-त्रपीयस्-द्राघीयस्-ह्रसीयस्-वृन्दीयस्-भूयस-प्रवीयस्-प्रमुखाः सर्वेऽपि ॥ 'कृ' कर्तुमिच्छति "तुमर्हाद्०" ॥ ३ । ४ । २१ ॥ सन् "स्वरहन्गमोः सनि धुटि" ॥ ४ । १ । १०४ ॥ दीर्घ. "ऋतां क्ङितीर्" ॥ ४ । ४ । ११६ ॥ "भ्वादेर्नामिन.०" ॥ २ । १ । ६३ ॥ "सन्यङश्च" ॥ ४ । १ । ३ ॥ द्वित्वम् इत्यादि सर्व चिकीर्ष् कट चिकीर्षतीति क्विप् "अतः" ॥ ४ । ३ । ८२ ॥ अलोपः सिलोपः "रात् सः" ॥ २ । १ । ९० ॥ षलोपे षत्वस्य परेऽसत्त्वात् सस्यैव लोपः कटचिकी. । कटचिकीर्षौ कटचिकीर्ष.-स्वरे सन्धिः । पूर्ववत् कटचिकीर्भ्याम् कटचिकीर्भि. । कटचिकीर्षु । आ० एवम् । स्त्रियामेवम् । क्लीबे-कटचिकीः कीर्षी, कीर्षि २ । आ० एवम् । एवमिघार्ष्-शत्रु-शिशीर्ष् प्रियसुस्मूर्ष्-मुख्याः ॥ 'पच्' पक्तुमिच्छति सन् द्वित्वादि पिपक्ष् मांस पिपक्षतीति क्विप् मांसपिपक्ष्-"अतः" ॥ ४ । ३ । ८२ ॥ अलोप. सिलोप "पदस्य" ॥ २ । १ । ८९ ॥ षलोपे मासपिपक्, ग् अत्र "चज. कगम्" ॥ २ । १ । ८६ ॥ इति कत्वस्य परस्मिन् लोपेऽसत्त्वात् "सयोगस्यादौ०" ॥ २ । १ । ८८ ॥ इति कलुक् न स्यात् मांसपिपक्षौ-स्वरे सन्धिः । पूर्ववत् मासपिपग्भ्याम्, मासपिपग्भिः । मासपिपक्षु, ख्षु । आमन्त्रणे एवम् । स्त्रियामवम् । क्लीबे-मासपिपक्, ग् मासपिपक्षी, मासपिपङ्क्षि २ । आ० एवम् । एव घृतपिपक्ष्-धर्मसिसृक्ष्-वाक्यविवक्ष् आम्रसिसृक्ष् मुख्याः ॥

हन्ताः-तुर त्वरित साहयत्यरीन् पृषोदरादित्वात् तुरासाह्-कातन्त्रे "सहेष्षोड" ॥ ६४८ ॥ षत्वम् इति पदान्ते एव षत्वम् । तुराषाड् तुरासाहौ तुरासाह । इत्यादि ॥ व्याकरणे तु पृषोदरादित्वात् तुराषाह् सिलोपः "हो धुट्पदान्ते" ॥ २ । १ । ८२ ॥ "धुटस्तृतीय." ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ तुराषाट्, ड् । तुराषाहौ तुराषाह.-स्वरे सन्धि. । तुराषाड्भ्याम् तुराषाड्भिः । तुराषाट्सु, ट्सु । आ० एवम् । पृतनासाह् [षाह्] "हो धुट्पदान्ते" ॥ २ । १ । ८२ ॥ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ हव्यवाट्, ड् । हव्यवाहौ ५ । कातन्त्रे सूत्रम् अघुट्स्वरे "वाहेर्वाशब्दस्यौ." ॥ २ । २ । ४८ ॥ हव्यौहः । हव्यौहा, हव्यवाड्भ्याम्, हव्यवाड्भि. । हव्यौहे इत्यादि । हव्यवाट्सु, ट्सु । आमन्त्र्ये एवम् । व्याकरणे तु अधुट्स्वरे न औः हव्यवाहः हव्यवाहा । हव्यवाहे । हव्यवाहः २ । इत्यादि । एव पृष्ठवाह्-पृष्ठवाट्, ड् पृष्ठवाहौ ५ । कातन्त्रे प्रष्ठौह. । प्रष्ठौहा । व्याकरणे तु पृष्ठवाह. । पृष्ठवाहा इति हव्यवाह्वत् । स्त्रियां प्रष्ठौही नदीवत् । कातन्त्रे अनड्वाह् व्याकरणे अनडुह्-"अनडुह. सौ" ॥ १ । ४ । ७२ ॥ नोन्तः "वाः शेषे" ॥ १ । ४ । ८२ ॥ घुटि "पदस्य" ॥ २ । १ । ८९ ॥ अनड्वान् अनड्वाहौ ५ । अनडुहः । अनडुहा "स्रस्ध्वस्क्वस्सनडुहो द." ॥ २ । १ । ६८ ॥ अनडुद्भ्याम् अनडुद्भिः । अनडुहे इत्यादि-स्वरे सन्धिः । अनडुत्सु, थ्सु । आमन्त्र्ये-"उतोऽनडुच्चतुरो व." ॥ १ । ४ । ८१ ॥ हे अनड्वन् अग्रे पूर्ववत् । स्त्रियाम्-अनडुही केचित् अनड्वाही नदीवत् ॥२-२२॥

**स्त्रियामुपानह्-सहशा, वाच्यलिङ्गा मुहादयः ।**
**क्षन्ता वाच्यलिङ्गाः काष्ठ,-तक्ष् गोरक्ष् प्रमुखा मताः ॥ ४९ ॥**

उपनह्यति क्विप् "गतिकारकस्य नहि०" ॥ ३ । २ । ८५ ॥ दीर्घ. उपानह्-सिलोप. "नहाहोर्धतौ" ॥ २ । १ । ८५ ॥ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ उपानत्, द् । उपानहौ-स्वरे सन्धि. । "नहाहोर्धतौ" ॥ २ । १ । ८५ ॥ उपानद्भ्याम् उपानद्भि. । उपानत्सु, थ्सु । आमन्त्र्ये एवम् ॥ मुह्यतीति मुह्-सिलोप. "मुहद्रुहस्णुहष्णिहो वा" ॥ २ । १ । ८४ ॥ वा घत्वम् "धुटस्तृतीयः" ॥ २ १ १ । ७६ ॥ पक्षे "हो धुट्पदान्ते" ॥ २ । १ । ८२ ॥ मुक्, मुग्, मुट्, मुड् । मुहौ-स्वरे सन्धि. । मुग्भ्याम्, मुड्भ्याम् । मुक्षु, मुख्षु, मुट्सु, मुट्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे मुक्, मुग्, मुट्, मुड् मुही मुंहि २ । आ० एवम् ॥ मित्राय द्रुह्यतीति मित्रद्रुह्-सिलोप. "मुहद्रुह" ॥ २ । १ । ८४ ॥ वा घे पक्षे "हो धुट्पदान्ते" ॥ २ । १ । ८२ ॥ ढे गडदबादे:०" ॥ २ । १ । ७७ ॥ दो धः मित्रध्रुक्, ग्, ट्, ड् । मित्रद्रुहौ-स्वरे सन्धि. । मित्रध्रुग्भ्याम्, मित्रध्रुड्भ्याम्, मित्रध्रुक्षु, ख्षु, ट्सु, ट्सु । आ० एवम् । क्लीबे-मित्रध्रु ४ क्, ग्, ट्, ड् मित्रद्रुही मित्रद्रुंहि २ । आ० एवम् । चेलस्निह् पूर्वमुह्शब्दवत्, चेलस्निक्-ग्,

ट्, ड् । चेलक्लिहौ-स्वरे सन्धिः । चेलक्लिग्भ्याम्, चेलक्लिड्भ्याम् । चेलक्लि ४ क्षु, खुषु, ट्सु, ठ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-चेलक्लिक्, ग्, ट्, ड् चेलक्लिही चेलक्लिहि २ । आ० एवम् । एवमुत्स्निहशब्दः । ऊर्ध्वं स्निह्यति "ऋत्विज्दिश्०" ॥२ । १ । ६९ ॥ इति सूत्रनिर्देशात् उष्णिह् अनेनैव च पदान्ते गत्वम्-उष्णिग्, क् । उष्णिहौ-स्वरे सन्धिः । उष्णिग्भ्याम् । उष्णिक्षु, खुषु । आ० एवम् ॥ गां दोग्धि क्विप् गोदुह्-सिलोपः "भ्वादेर्दादेर्घः" ॥ २ । १ । ८३ ॥ "गडदबादे:०" ॥ २ । १ । ७७ ॥ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ (गोधुक्, ग् । गोदुहौ-स्वरे सन्धिः । गोधुग्भ्याम् गोधुग्भिः ) गोधुक्षु, खुषु । आ० एवम् । स्त्रियामेवम् । क्लीबे-गोधुक्, ग गोदुही गोदुहि २ । आ० एवम् ॥ शोभना अनड्वाहो यस्य यस्या वा कुलस्य वा स्वनडुह् पुंसि मुख्यानडुह्वत् । स्त्रियां स्वनडुही मते स्वनड्वाही नदीवत् । क्लीबे "अनतो लुप्" ॥ १ । ४ । ५९ ॥ "स्रसध्वसक्वस्सनडुहो दः" ॥ २ । १ । ६८ ॥ स्वनडुत्, द् स्वनडुही स्वनड्वाहि २ । आ० एवम् । न विद्यते उपानद् यस्य यस्या वा कुलस्य वा अनुपानह् पुंस्त्रियो-र्मुख्योपानह्वत् । क्लीबे-अनुपानत्-द्, अनुपानही अनुपानहि २ । आ० एवम् । शालावाहमुख्याः पुंस्त्रियोः पृष्ठवाह्वत् । क्लीबे-शालावाट्, ड् । कातन्त्रे शालौही । व्याकरणे शालावाही शालावांहि २ । आ० एवम् ॥ काष्ठं तक्ष्णोतीति क्विप् काष्ठतक्ष्-सिलोपः "सयोगस्यादौ०" ॥ २ । १ । ८८ ॥ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ काष्ठतट्, ड् । काष्ठतक्षौ-स्वरे सन्धिः । काष्ठतड्भ्याम्, काष्ठतड्भिः । काष्ठतट्सु-ठ्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-काष्ठतट्-ड्, काष्ठतक्षी काष्ठतङ्क्षि २ । आ० एवम् । एव गोरक्ष्-दन्तत्वक्ष्-रिपुस्तृक्ष्-मुख्याः । विशेषक्षान्ताः-प्रपूर्वं 'विश्' 'लिह्' प्रवेष्टु लेढुमिच्छति सन् द्वित्वादि च "यजसृजमृज०" ॥ २ । १ । ८७ ॥ "हो धुट्पदान्ते" ॥ २ । १ । ८२ ॥ क्रमात् "षढोः कस्सि" ॥ २ । १ । ६२ ॥ गृह प्रविविक्षति मधु लिलिक्षति क्विप् "अतः" ॥ ४ । ३ । ८२ ॥ अलोपे गृहप्रविविक्ष्-मधुलिलिक्ष्-सिलोपः । कातन्त्रे षढस्थानीयकस्य लोपः स्यात् । ततः षस्य रत्वादौ च गृहप्रविवीः । मधुलिलीः । एव पदान्ते गृहप्रविवीर्भ्याम् । मधुलिलीर्षु । तत्र व्यवस्थितवाऽधिकारात् विसर्गो न स्यात् । स्वरे सन्धिः-गृहप्रविविक्षौ मधुलिलिक्षौ इत्यादि । व्याकरणे मांसपिपक्ववदसत्त्वात् कुत्वम् न ततः "पदस्य" ॥ २ । १ । ८९ ॥ गृहप्रविविक्-ग् । मधुलिलिक्-ग् । गृहप्रविविक्षौ । मधुलिलिक्षौ-स्वरे सन्धिः । गृहप्रविविग्भ्याम् । मधुलिलिग्भ्याम् । गृहप्रविविक्षु-खुषु । मधुलिलिक्षु-खुषु ॥२-२३॥

इति स्यादिशब्दसमुच्चये व्यञ्जनान्तशब्दोल्लासस्य द्वितीयस्यावचूर्णिः ॥ २ ॥

---

**सर्वनामगणेऽन्यादि,-र्डतमप्रत्ययावधिः ।**
**पूर्वादिरन्तरान्तस्तु, त्यदादिर्द्व्यवधिः पुनः ॥ ५० ॥**

अथ सर्वनामगणशब्दाः सर्व १ विश्व २ उभ ३ उभयट् ४ अन्य ५ अन्यतर ६ इतर ७ डतर ८ डतम ९ त्व १० त्वत् ११ नेम १२ सम १३ सिमौ १४ सर्वार्थौ । पूर्व १ परा २ वर ३ दक्षिणो ४ त्तरा ५ परा ६ धराणि व्यवस्थायाम् ७ । स्वमज्ञातिधनाऽऽख्यायाम् ८ । अन्तर बहिर्योगोपसव्यानयोरपुरि ९ । २३ । त्यद् १ तद् २ यद् ३ अदस् ४ इदम् ५ एतद् ६ एक ७ द्वि ८ । ३१ । युष्मद् ३२ भवतु ३३ अस्मद् ३४ किम् ३५ इत्यसज्ञाया सर्वादि. । कातन्त्रे किञ्चिद् व्यस्ताः ।

सर्वः सर्वौ "जस इः" ॥ १ । ४ । ९ ॥ सर्वे । सर्वम् सर्वान् । सर्वेण सर्वाभ्याम् सर्वैः । "सर्वादेः स्मैस्मातौ" ॥ १ । ४ । ७ ॥ सर्वस्मै । सर्वस्मात् सर्वेभ्यः । सर्वस्य सर्वयोः "अवर्णस्याऽऽमः साम्" ॥ १ । ४ । १५ ॥ सर्वेषाम् । "ङेः स्मिन्" ॥ १ । ४ । ८ ॥ सर्वस्मिन् सर्वेषु । आ० "अदेतः स्यमोर्लुक्" ॥ १ । ४ । ४४ ॥ हे सर्व हे सर्वौ हे सर्वे । "त्यादिसर्वादेः स्वरेष्वन्त्यात् पूर्वोऽक्" ॥ ७ । ३ । २९ ॥ सर्वकः सर्वकौ सर्वके । इत्यादि सर्ववत् । स्त्रियाम्-"आत्" ॥ २ । ४ । १८ ॥ आप् सर्वा-श्रद्धावत् पर "आपो ङितां यैयास्यास्याम्" ॥ १ । ४ । १७ ॥ "सर्वादेर्डस्पूर्वाः" ॥ १ । ४ । १८ ॥ "डित्यन्त्यस्वरादेः" ॥ २ । १ ११४ ॥ सर्वस्यै । सर्वस्याः २ । "अवर्णस्याऽऽमः साम्" ॥ १ । ४ । १५ ॥ सर्वासाम् । आ० श्रद्धावत् । अकि । "अस्यायत्तत्क्षिपकादीनाम्" ॥ २ । ४ । १११ ॥ सर्विका सर्वावत् । क्लीबे-सर्वम् सर्वे सर्वाणि २ । आ० हे सर्व इत्यादि । सर्वकम् सर्वके सर्वकाणि २ । आ० हे सर्वक इत्यादि । सर्वेऽपि चामी सज्ञाया सर्वादयो न । सर्वो नाम कश्चित् । सर्वाय । सर्वात् । उत्तराय कुरवे स्पृहयति ॥ समस्तवाची विश्वोऽप्येवम् ॥ उभ द्विवचनान्त एव । उभौ २ । उभाभ्याम् ३ । उभयोः २ । अकि उभकौ इत्यादि । स्त्रियाम् उभे २ । उभाभ्याम् ३ । उभयोः २ । अकि उभिके २ इत्यादि । क्लीबे-उभे २ । उभके २ । पु० आ० हे उभौ । स्त्री० हे उभे । क्लीबे-आ० हे उभे । उभाववयवौ यस्य उभाभ्यामयट् टो ङ्यर्थः उभयः "नेमार्धप्रथम०" ॥ १ । ४ । १० ॥ उभये, उभयाः ।

शेषं सर्ववत् । स्त्रियाम्--उभयी उभयकी नदीवत् । क्लीबे सर्ववत् । उभयः द्व्यार्थः ॥ अन्याद्याः ३ पुंस्त्रियोः अकि च सर्ववत् । क्लीबे-"पञ्चतोऽन्यादेः०" ॥ १ । ४ । ५८ ॥ स्यमोर्द. अन्यत् अन्यकत् । अन्यतरत् अन्यतरकत् । इतरत् इतरकत् । शेष सर्ववत् । आ० एवम् ॥ डतरग्रहणेनैव सिद्धे अन्यतरग्रहण डतमप्रत्ययान्तस्यान्यशब्दस्य सर्वादित्वनिवृत्त्यर्थम् । अन्यतमाय । अन्यतम वस्त्रम् । एके त्वाहु.-'नाय डतरप्रत्ययान्तोऽन्यतरशब्दः, किन्त्वव्युत्पन्नस्तरोत्तरपदस्तरबन्तो वा' तन्मते डतमान्तस्यापि अन्यशब्दस्य सर्वादित्वम् । अन्यतमस्मै । अन्यतमत् । डतरडतमौ प्रत्ययौ, तयोः स्वार्थिकत्वात् प्रकृतिद्वारेणैव सिद्धे पृथगुपादान, अत्र प्रकरणे अन्यस्वार्थिकप्रत्ययान्तानामग्रहणार्थं अन्यादिलक्षणदार्थं च ॥ द्वयोर्मध्ये प्रकृष्टे "यत्तत्किमन्यात्" ॥ ७ । ३ । ५३ ॥ डतर. "बहूना प्रश्ने डतमश्च वा" ॥ ७ । ३ । ५४ ॥ यतरः यतमः । ततर. ततमः । एकतर. एकतमः । अन्यतरः अन्यतम. । सर्वेऽपि अन्यवत् । पर क्लीबे एकतरस्य एकतरवर्जनात् "पञ्चतोऽन्यादेः०" ॥ १ । ४ । ५८ ॥ इति न । एकतरमित्यादि । अन्यस्वार्थिकप्रत्ययान्तानामग्रहणाद् इह न स्यात् सर्वतमाय सर्वतमात् अत्र "प्रकृष्टे तमप्" ॥ ७ । ३ । ५ ॥ त्व. अन्यार्थ. सर्ववत् । त्वत् समुच्चयार्थः । त्वत् । त्वतौ-स्वरे सन्धिः । त्वद्भ्याम् । त्वत्सु, त्सु । आ० एवम् । स्त्रियामेवम् । क्लीबे-त्वत् त्वती त्वन्ति २ । आ० एवम् ॥ नेम अर्धार्थः सर्ववत् । पर जसि "नेमार्ध०" ॥ १ । ४ । १० ॥ इति नेमे, नेमा. । समसिमौ सर्वार्थौ सर्ववत् । सर्वार्थाभावे समाय देशाय सिमाय अश्वाय ॥

पूर्वादिषु नवसु पूर्वादीनां सप्तानां व्यवस्थाया सर्वादित्वम् । स्वाभिधेयापेक्षाऽवधिनियमो व्यवस्था । एषां नवानामपि "नवभ्य. पूर्वेभ्य.०" ॥ १ । ४ । १६ ॥ इति पूर्वे, पूर्वा. । पूर्वस्मात्, पूर्वात् । पूर्वस्मिन्, पूर्वे । शेष सर्वलिङ्गेषु सर्ववत् । व्यवस्थाया अन्यत्र न स्यात् । दक्षिणाय गाथकाय देहि-प्रवीणायेत्यर्थ. । दक्षिणायै द्विजाः स्पृहयन्ति । सञ्ज्ञायां च न-पूर्वो नाम कश्चित् । पूर्वाय उत्तराय कुरवे । स्वशब्दश्चतुर्ष्वर्थेषु आत्मनि आत्मीये धने ज्ञातौ च ४ । आत्माऽऽत्मीयार्थयोरेवास्य सर्वादित्वम्-यत् स्वस्मै रोचते तत् स्वस्मै ददाति-यदात्मने रोचते तदात्मीयाय ददातीत्यर्थ. । स्वशब्दः पूर्वशब्दवत् । ज्ञातिधनार्थयोस्तु न-स्वाय दातुं स्वाय स्पृहयति-ज्ञातये दातु धनाय स्पृहयतीत्यर्थः । अन्तर बहिर्योगे धर्मे बहिष्टे धर्मिणि च बहिःशब्दः बहिर्भावे उपरि संवीयतेऽनेन कटिरिति करणसाधनः । उपसंवीयते यत् तत् उपसंवीयमान बाह्येन वा योगे उपसंव्याने उपसंवीयमाने चाऽर्थेऽन्तरशब्द. सर्वादिः । न चेद् बहिर्योगेऽपि पुरि वर्त्तते-अन्तरस्मै गृहाय-चण्डालादिगृहायेत्यर्थः । चण्डालादिगृहयुक्ताय वा-नगराभ्यन्तरगृहायेत्यर्थः । अन्तरस्मै पटाय-पटचतुष्टये तृतीयाय चतुर्थाय वेत्यर्थः । प्रबहिस्तो गणने प्रथमद्वितीययोर्बहिर्योबहिर्योगेणैव सिद्धत्वात् । पुरि तु न । अन्तरायै पुरे कुप्यति-चण्डालादिपुर्यै इत्यर्थः । बहिर्योगोपसंव्यानादेरन्यत्र तु न स्यात् अयमनयोर्ग्रामयोरन्तरात् तापस आयातः-मध्यादित्यर्थः । अन्तरशब्दोऽपि पूर्वशब्दवत् ।

त्यादौ "आ द्वेरः" ॥ २ । १ । ४१ ॥ "लुगस्यादेत्यपदे" ॥ २ । १ । ११३ ॥ "तः सौ स." ॥ २ । १ । ४२ ॥ स्यः । सर्वत्र "आ द्वेरः" ॥ २ । १ । ४१ ॥ "लुगस्य०" ॥ २ । १ । ११३ ॥ कृते सर्ववत् त्य त्ये इत्यादि । अकि-स्यकः त्यकौ । त्यकस्मै इत्यादि स्त्रियामेवम्--"आ द्वेरः" ॥ २ । १ । ४१ ॥ आपि च स्या त्ये त्याः । इत्यादि सर्ववत् । अकि-"अस्यायत्तत्क्षिपकाऽऽदीनाम्" ॥ २ । ४ । १११ ॥ स्यिका त्यिके त्यिकाः । त्यिकस्यै इत्यादि । क्लीबे-स्यमोर्लुप् लुप्तत्वाद् "आ द्वेर." ॥ २ । १ । ४१ ॥ "तः सौ स." ॥ २ । १ । ४२ ॥ इति न । त्यत् त्ये त्यानि २ । अकि-त्यकत् त्यके त्यकानि २ ॥ पुक्लीबयो' तद् त्यद्वत् । स. तौ ते इत्यादि । अकि सक. तकौ तके इत्यादि । स्त्रियाम् सा ते ता' इत्यादि । अकि तु "अस्यायत्तत्क्षिपकाऽऽदीनाम्" ॥ २ । ४ । १११ ॥ इति न । सका तके तकाः इत्यादि । क्लीबे तत् ते तानि २ । अकि-तकत् तके तकानि २ ॥ यद् तद्रीत्या यः यौ ये इत्यादि । यक. यकौ यके इत्यादि । स्त्रियाम्-या ये याः इत्यादि । अकि तु "अस्यायत्" ॥ २ । ४ । १११ ॥ इः न यका यके यकाः इत्यादि । क्लीबे-यत् यकत् इत्यादि ॥ अदस्-"अदसो दः सेस्तु डौ" ॥ २ । १ । ४३ ॥ असौ । "आ द्वेर." ॥ २ । १ । ४१ ॥ "मोऽवर्णस्य" ॥ २ । १ । ४५ ॥ सर्वत्राप्येव "ऐदौत् सन्ध्यक्षरै." ॥ १ । २ । १२ ॥ "मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ "आसन्नः" ॥ ७ । ४ । १२० ॥ अमू । "जस इ." ॥ १ । ४ । ९ ॥ "बहुष्वेरी." ॥ २ । १ । ४९ ॥ अमी । "समानादमोऽतः" ॥ १ । ४ । ४६ ॥ "मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ अमुम् अमून् । "प्रागिनात्" ॥ २ । १ । ४८ ॥ अमुना । "अत आः स्यादौ जस्भ्याम्ये" ॥ १ । ४ । १ ॥ मादु०" ॥ २ । १ । ४७ ॥ अमूभ्याम् । "इदमदसोऽक्येव" ॥ १ । ४ । ३ ॥ इति नियमात् ऐस् न "एद् बहुस्भोसि" ॥ १ । ४ । ४ ॥ "बहुष्वेरी." ॥ २ । १ । ४९ ॥ अमीभि. । स्मै "मादुवर्णः०" ॥ २ । १ । ४७ ॥ पत्वं अमुष्मै । अमुष्मात् । स्म "मादुवर्णः०" ॥ २ । १ । ४७ ॥

अमुष्य । "एद् बहुस्भोसि" ॥ १ । ४ । ४ ॥ "एदैतोऽयाय्" ॥ १ । २ । २३ ॥ "मादुवर्ण०" ॥ २ । १ । ४७ ॥ अमुयोः । "अवर्णस्याऽऽमः साम्" ॥ १ । ४ । १५ ॥ "एद् बहुस्०" ॥ १ । ४ । ४ ॥ "बहुष्वेरी." ॥ २ । १ । ४९ ॥ अमीषाम् । अमुष्मिन् अमीषु । अकि-"असुको वाऽकि" ॥ २ । १ । ४४ ॥ असुकः, पक्षे "अदसो दः०" ॥ २ । १ । ४३ ॥ असकौ "आ द्वेरः" ॥ २ । १ । ४१ ॥ "मोऽवर्णस्य" ॥ २ । १ । ४५ ॥ "मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ अमुकः । सर्वत्र अमुकौ अमुके इति सर्ववत् । स्त्रियाम्-"आ द्वेर." ॥ २ । १ । ४१ ॥ "अदसो द.०" ॥ २ । १ । ४३ ॥ असौ पूर्ववत् आपि च अमा सर्वत्र "औता" ॥ १ । ४ । २० ॥ "मादुवणाऽनु" ॥ २ । १ । ४७ ॥ अमू "समानाना०" ॥ १ । २ । १ ॥ मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ अमूः । अमूम् । अमू । "टौस्येत्" ॥ १ । ४ । १९ ॥ "एदैतोऽयाय्" ॥ १ । २ । २३ ॥ "मादुवर्णोऽनु" ॥ २ । १ । ४७ अमुया अमूभ्याम् अमूभिः । "आपो ङिता०" ॥ १ । ४ । १७ ॥ "सर्वादेर्डस्पूर्वाः" ॥ १ । ४ । १८ ॥ "मादुवर्णोऽनु" ॥ २ । १ । ४७ ॥ पत्वे अमुष्यै अमुष्याः २ । "टौस्येत्" ॥ १ । ४ । १९ ॥ अमुयोः । अमूषाम् । अमुष्याम् अमूषु । अकि पूर्ववत् । आपि च असुका, असुकौ असुके । सर्वत्र असुके इत्यादि सर्विकावत् । क्लीबे–स्यामोर्लुप् लुप्तत्वात् "आ द्वेर." ॥ २ । १ । ४१ ॥ इत्यादि न अदः "औरी." ॥ १ । ४ । ५६ ॥ "मादुवर्ण.०" ॥ २ । १ । ४७ ॥ अमू अमूनि २ । अकि–अदकः अमुके अमुकानि २ ॥ इदम्– "अयमियं पुंस्त्रियोः सौ" ॥ २ । १ । ३८ ॥ अयम् "आ द्वेर." ॥ २ । १ । ४१ ॥ "दो म. स्यादौ" ॥ २ । १ । ३९ ॥ इमौ इमे । इमम्, अन्वादेशे द्वितीयाटौसि "इदम." ॥ २ । १ । ३४ ॥ इति एनद् "आ द्वेर." ॥ २ । १ । ४१ ॥ एनम् । इमौ, एनौ । इमान्, एनान् । "टौस्यनः" ॥ २ । १ । ३७ ॥ अनेन, एनेन । "अनक्" ॥ २ । १ । ३६ ॥ इति अत् आभ्याम् । "इदमदसोः०" ॥ १ । ४ । ३ ॥ इति नियमात् एभिः । केषाचित् इमैः । अस्मै । अस्मात् । अस्य । "टौस्यनः" ॥ २ । १ । ३७ ॥ अनयो., एनयोः । अस्मिन् एषु । अकि साकोऽपि "अयमियं पुंस्त्रियोः सौ" ॥ २ । १ । ३८ ॥ अयम् । अपरे त्यादेशे कृते अकमिच्छन्ति तन्मते अयकम् इमकौ इमके । इमकम्, "इदमः" ॥ २ । १ । ३४ ॥ साकोऽपि एनद् एनम् । इमकौ, एनौ । इमकान्, एनान् । साक्त्वात् "टौस्यनः" ॥ २ । १ । ३७ ॥ इति न । इमकेन, एनेन । "अद् व्यञ्जने" ॥ २ । १ । ३५ ॥ साक एत्र आभ्याम् । इमकैः । ओसि इमकयोः, एनयो. । शेष सर्वकवत् । स्त्रियाम्-"अयमियम्०" ॥ २ । १ । ३८ ॥ इयं इमे इमा. । इमाम्, एनाम् । इमे, एने । इमाः, एनाः । अनया, एनया आभ्याम् आभि. । "आ द्वेरः" ॥ २ । १ । ४१ ॥ "दो मः स्यादौ" ॥ २ । १ । ३९ ॥ आप् "आपो ङिताम्०" ॥ १ । ४ । १७ ॥ "अनक्" ॥ २ । १ । ३६ ॥ "सर्वादेर्डस्पूर्वाः" ॥ १ । ४ । १८ ॥ अस्यै । अस्याः २ । अत्र परत्वात् पूर्वमदादेशे पश्चात् डस् अनयोः, एनयो. । अस्याम् । आसु । अकि पूर्वरीत्या इय इयकम् "अस्यायतत्तत्०" ॥ २ । ४ । १११ ॥ इमिके इमिकाः । इमिकाम्, साकोऽप्येनद् एनाम् । इमिके, एने । इमिकाः, एनाः । इमिकया । एनया । इमिकयो., एनयोः । शेष सार्विकावद् । क्लीबे–पूर्वरीत्या इद "औरी." ॥ १ । ४ । ५६ ॥ इमे इमानि । द्वि० इदम्, एनद् इमे, एने इमानि, एनानि । अकि-इकदं इकमे इमकानि । द्विती० इदकम्, एनद् इमके, एने इमकानि, एनानि ॥ एतद् "आ द्वेर." ॥ २ । १ । ४१ ॥ "तः सौ सः" ॥ २ । १ । ४२ ॥ षत्वे च एषः । एतौ । एते । एतम्, "त्यदामेनदेतदः०" ॥ २ । १ । ३३ ॥ एनम् । एतौ, एनौ । एतान्, एनान् । एतेन, एनेन । एतयो', एनयोः २ । शेषम् "आ द्वेरः" ॥ २ । १ । ४१ ॥ इति कृते सर्ववत् । एताभ्याम् इत्यादि । अकि–एषक. एतकौ एतके । एतकम् साकोऽप्येनद् एनम् । एतकौ, एनौ । एतकान्, एनान् । एतकेन, एनेन । एतकयोः, एनयोः । शेष सर्वकवत् एतकाभ्याम् इत्यादि । स्त्रियाम् एषा एते एता. । एताम्, एनाम् । एते, एने । एता., एना., एतया, एनया । एतयोः, एनयो., । शेष सर्वावत् एताभ्याम् एताभिः इत्यादि । अकि-"द्व्येषसूतपुत्रवृन्दारकस्य" ॥ २ । ४ । १०९ ॥ वा इः एषका, एषिका । अन्यत्र "अस्यायतत्तत०" ॥ २ । ४ । १११ ॥ एतिके एतिकाः । एतिकाम्, साकोऽप्येनद् एनाम् । एतिके, एने । एतिकाः, एनाः । एतिकया, एनया । एतिकयोः, एनयोः । शेषं सर्विकावत् एतिकाभ्याम् एतिकाभिः इत्यादि । क्लीबे–एतत् एते एतानि । द्वि० एतत्, एनत् एते, एने एतानि, एनानि । अकि-एतकत् एतके एतकानि । द्विती० एतकत्, साकोऽप्येनद् एनत् एतके, एने एतकानि, एनानि ॥ एकशब्दात् एकसङ्ख्यावाचकत्वाद् एकवचनमेव । अन्यशब्दपर्यायात् तु सर्वाणि वचनानि । द्वयोरपि सर्वादौ त्यादिषु पाठः । सर्वलिङ्गेषु अकि च सर्ववत् । द्विशब्दात् द्विसङ्ख्यावाचकत्वात् द्विवचनान्येव । "आ द्वेरः" ॥ २ । १ । ४१ ॥ द्वौ २ । द्वाभ्याम् ३ । द्वयोः २ । अकि-द्वकौ २ । द्वकाभ्याम् ३ । द्वकयोः २ । स्त्रियाम् द्वे २ । अकि-"द्व्येषसूतपुत्र०" ॥ २ । ४ । १०९ ॥ वा इः द्विके, द्वके २ । द्विकाभ्याम्, द्वकाभ्याम् ३ । द्विकयोः, द्वकयोः २ । क्लीबे–द्वे । अकि द्वके २ ॥ ३-१ ॥

युष्मदस्मद्-भवन्तश्च स्वस्वोक्तप्रक्रियास्पृशः ।
पूर्व्वादियुक्तस्त्वन्यादि,-गणः किञ्चित् पृथक्क्रियः ॥ ५१ ॥

अलिङ्गे युष्मदस्मदी—"त्वमह सिना प्राक् चाकः" ॥ २ । १ । १२ ॥ त्वम् । अहम् । "मन्तस्य युवावौ द्वयोः" ॥ २ । १ । १० ॥ "अमौ मः" ॥ २ । १ । १६ ॥ "युष्मदस्मदोः" ॥ २ । १ । ६ ॥ युवाम् । आवाम् । "यूय वयं जसा" ॥ २ । १ । १३ ॥ यूयम् । वयम् । "त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्" ॥ २ । १ । ११ ॥ "अमौ मः" ॥ २ । १ । १६ ॥ "युष्मदस्मदोः" ॥ २ । १ । ६ ॥ त्वाम् । माम् । "अमा त्वामा' ॥ २ । १ । २४ ॥ त्वा । मा । "द्वित्वे वान्नौ" ॥ २ । १ । २२ ॥ वाम् । नौ । एवमग्रे । "शसो नः" ॥ २ । १ । १७ ॥ "युष्मदस्मदोः" ॥ २ । १ । ६ ॥ युष्मान् । अस्मान् । "पदाद् युगविभक्त्यैकवाक्ये वस्नसौ बहुत्वे" ॥ २ । १ । २१ ॥ वः । नः । "त्वमौ प्रत्ययोत्तर०" ॥ २ । १ । ११ ॥ "टाङ्योसि य." ॥ २ । १ । ७ ॥ त्वया । मया । "मन्तस्य युवावौ द्वयोः" ॥ २ । १ । १० ॥ "युष्मदस्मदोः" ॥ २ । १ । ६ ॥ युवाभ्याम् ३ । आवाभ्याम् ३ । "युष्मदस्मदो." ॥ २ । १ । ६ ॥ युष्माभिः । अस्माभिः । "तुभ्य मह्य ङया" ॥ २ । १ । १४ ॥ तुभ्यम् । मह्यम् । "ङेङसा ते मे" ॥ २ । १ । २३ ॥ ते । मे । वाम् । नौ । "अभ्य भ्यसः" ॥ २ । १ । १८ ॥ "शेषे लुक्" ॥ २ । १ । ८ ॥ युष्मभ्यम् । अस्मभ्यम् । वः । नः । "त्वमौ प्रत्यय०" ॥ २ । १ । ११ ॥ "ङसेश्चाद्" ॥ २ । १ । १९ ॥ "शेषे लुक्" ॥ २ । १ । ८ ॥ त्वत् । मत् । "ङसेश्चाद्" ॥ २ । १ । १९ ॥ "शेषे लुक्" ॥ २ । १ । ८ ॥ युष्मत् । अस्मत् । "तव मम ङसा" ॥ २ । १ । १५ ॥ तव । मम । "ङेङसा तेमे" ॥ २ । १ । २३ ॥ ते । मे । "मन्तस्य०" ॥ २ । १ । १० ॥ "टाङ्योसि यः" ॥ २ । १ । ७ ॥ युवयोः । आवयोः । वाम् । नौ । "आम आकम्" ॥ २ । १ । २० ॥ "शेषे लुक्" ॥ २ । १ । ८ ॥ युष्माकम् । अस्माकम् । "त्वमौ प्रत्यय०" ॥ २ । १ ॥ "टाङ्योसि य." ॥ २ । १ । ७ ॥ त्वयि । मयि । "युष्मदस्मदोः ॥" ॥ २ । १ । ६ ॥ युष्मासु, अस्मासु ॥ कातन्त्रे—सूत्रे [ २ । ३ । १ ] 'षष्ठीचतुर्थीद्वितीयासु' इति व्यतिक्रमनिर्देशात् क्वचित् पञ्चमीतृतीयाप्रथमास्वपि यथालक्ष्य वस्नसादयो भवन्ति । अकि—"युष्मदस्मदोऽसोमादिस्यादेः ॥ ७ । ३ । ३० ॥ इति अनयोः सकारादि-ओकारादि-भकारादिवर्जे-स्यादे. स्वरेष्वन्त्यस्वरात् पूर्वमक् स्यात् । रूप निष्पाद्य अन्त्यस्वरात् पूर्वमक् । स० ओ० भकारादौ तु शब्दान्त्यस्वरात् पूर्वमक् । प्राक् चाकः' इति वचनात् "त्वमह सिना०" ॥ २ । १ । १२ ॥ इत्यादि ४ सूत्राऽऽदेशा अकः प्रागेव । त्वकम् । अहकम् । युवकाम् । आवकाम् । यूयकम् । वयकम् । त्वकाम् । युवकाम् । आवकाम् । युष्मकान् । अस्मकान् । त्वयका । मयका । युवकाभ्याम् ३ । आवकाभ्याम् ३ । युष्मकाभिः । अस्मकाभिः तुभ्यकम् । मह्यकम् । युष्मकभ्यम् । अस्मकभ्यम् । त्वकत् । मकत् । युष्मकत् । अस्मकत् । तवक । ममक । युवकयोः २ । आवकयोः २ । युष्माककम् । अस्माककम् । त्वयकि । मयकि । युष्मकासु । अस्मकासु ॥ प्रस्तावादन्यपदार्थेऽपि कथ्यते—त्वां मामतिक्रान्तः अतिक्रान्तौ अतिक्रान्ता वा "प्रात्यव०" ॥ ३ । १ । ४७ ॥ इति समास. । नात्र गौणमुख्यचिन्ता अस्तीति समासेऽपि । अतित्वम् अत्यहम् । समासेऽपि अलिङ्गत्वमेव । तथा—

समस्येते यदैकत्वे, बहुत्वे युष्मदस्मदी ।
समासो वर्त्तते द्वित्वे, न युवावौ तदा तयोः ॥ १ ॥

"त्वमौ प्रत्यय०" ॥ २ । १ । ११ ॥ "अमौ म." ॥ २ । १ । १६ ॥ "युष्मदस्मदोः" ॥ २ । १ । ६ ॥ अतित्वाम् । अतिमाम् । "यूय वयं जसा" ॥ २ । १ । १३ ॥ अतियूयम् । अतिवयम् । अत्र च "त्वमह सिना०" ॥ २ । १ । १२ ॥ इत्यादि ४ सूत्राणि एकत्वद्वित्वबहुत्वेऽपि स्वविषये प्राप्नुवन्त्येव । अन्यवचनेषु तु—एकत्वे सर्वत्र "त्वमौ प्रत्यय०" ॥ २ । १ । ११ ॥ इति त्व म । द्वित्वे सर्वत्र "मन्तस्य०" ॥ २ । १ । १० ॥ इति युव आव । बहुत्वे प्रकृतिरूपम् । ततः शेषा प्रक्रिया । अमि अतित्वाम् । अतिमाम् । औ एवम्-अतित्वाम् अतिमाम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् । अतिमाभ्याम् । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वभ्यम । अतिमभ्यम् । अतित्वत् । अतिमत् । अतित्वत् । अतिमद् । अतितव । अतिमम । अतित्वयोः । अतिमयो' । अतित्वाकम् । अतिमाकम् । केचित् तु तत्सवधिन एवाऽऽम आकमादेशमिच्छन्ति तथा आमि दस्य यत्वम-पीच्छन्ति तन्मते-अतित्वयाम् । अतिमयाम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । आ० एवम् ॥ द्वित्वे युवामावामतिक्रान्त. तौ ता वा अतित्वम् । अत्यहम् । अतियुवाम् । अत्यावाम् । अतियूयम् । अतिवयम् । अतियुवाम् । अत्यावाम् । औ एवम् । अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् । अत्यावाभ्याम् । अतियुवाभि. । अत्यावाभिः । अतितुभ्यम् । अतिमह्यम् । अतियुवभ्यम् । अत्यावभ्यम् । अतियुवत् ।

अत्यावत् । अतियुवत् । अत्यावत् । अतितव । अतिमम । अतियुवयोः । अत्यावयोः अतियुवाकम् । अत्यावाकम् । पूर्ववत् मतेन–अतियुवयाम् । अत्यावयाम् । अतियुवयि । अत्यावयि । अतियुवासु । अत्यावासु । आ० एवम् ॥ बहुत्वे युष्मानस्मानतिक्रान्तः तौ ता वा पूर्वोक्तरीतिः । अतित्वम् । अत्यहम् । अतियुष्माम् । अत्यस्माम् । अतियूयम् । अतिवयम् । अतियुष्माम् । अत्यस्माम् । औ एवम् । अतियुष्मान् । अत्यस्मान् । अतियुष्मया । अत्यस्मया । अतियुष्माभ्याम् । अत्यस्माभ्याम् । अतियुष्माभिः । अत्यस्माभिः । अतितुभ्यम् । अतिमह्यम् । अतियुष्मभ्यम् । अत्यस्मभ्यम् । अतियुष्मत् । अत्यस्मत् । बहु० एवम् । अतितव । अतिमम । अतियुष्मयोः । अत्यस्मयोः । अतियुष्माकम् । अत्यस्माकम् । पूर्ववत् मतेन अतियुष्मयाम् । अत्यस्मयाम् । अतियुष्मयि । अत्यस्मयि । अतियुष्मासु । अत्यस्मासु । आ० एवम् । युष्मदस्मदोर्महान् विस्तरः स बृहद्वृत्तितो ज्ञेय ।

भवतु उदित्–"ऋदुदितः" ॥ १ । ४ । ७० "अभ्वादेः०" ॥ १ । ४ । ९० ॥ "पदस" ॥ २ । १ । ८९ ॥ भवान् । भवन्त. इत्यादि । आ० हे भवन् । कातन्त्रे–भो. । स्त्रियाम्–भवती नदीवत् । क्लीबे–भवत् भवती भवन्ति २ ॥ सर्वनामकार्यम् अक्–भवकान् भवकन्तौ भवकन्तः ५ । भवकत. । भवकद्भ्याम् इत्यादि । केचिदस्य स्याद्यन्तस्यान्त्यस्वरात् पूर्वमकमिच्छन्ति तन्मते–भवन्तकः भवन्तकमित्यादि । आ० हे भवकन्', स्त्रियाम्–भवकती नदीवत् । क्लीबे–भवकत् भवकती भवकन्ति २ ।

किम्––"किमः कस्तसादौ च" ॥ २ । १ । ४० ॥ कः कौ के । कम् कान् । केन काभ्याम् कैः । कस्मै सर्ववत् । साकोऽपि कादेशः । क. कौ इत्यादि । स्त्रियाम्––आपि का के का. सर्वावत् । साकोऽपि का के काः इत्यादि । क्लीबे––किं के कानि २ ॥ 'किमः सर्वविभक्त्यन्ताच्चित्चनौ' । कश्चित् । कश्चन । कौचित् । कौचन । केचित् । केचन इत्यादि ॥ स्त्रियाम्–काचित् । काचन० इत्यादि । क्लीबे–किंचित् । किञ्चन इत्यादि । उभ-त्वत्-द्वि-युष्मदस्मद्-भवत् शब्दानां स्यादयो न सम्भवन्तीति गणपाठे सर्वविभक्त्यादयः प्रयोजनम् । उभौ हेतू २ । उभाभ्याम् हेतुभ्याम् ३ । उभयो. हेत्वोः २ । त्वत् हेतुः । त्वतं हेतुम् इत्यादि सप्तापि विभक्तयः । द्वौ हेतू २ । द्वाभ्याम् हेतुभ्याम् इत्यादि ॥ त्वं हेतु. । त्वां हेतुम् इत्यादि । अह हेतुः । मा हेतुम् इत्यादि । भवान् हेतुः । भवन्त हेतुम् इत्यादि । आदेः अकादयश्च । अक् पूर्ववत् । अज्ञात. त्वत् त्वकत् इत्यादि । त्वादृशः । युष्मादृश. । मादृशः । अस्मादृशः । भवादृशः । अत्र "अन्यत्यदादेरा." ॥ ३ । २ । १५२ ॥ इति आत्वम् इत्यादि सर्वादित्वफलानि बृहद्वृत्तितो ज्ञेयानि । सर्वादेरिति षष्ठीनिर्देशेन तत्सवधिविज्ञानादिह न स्यात्–प्रियाः सर्वे यस्य तस्मै प्रियसर्वाय । सर्वानतिक्रान्ताय अतिसर्वाय । द्वावन्यावस्य द्व्यन्याय । त्र्यन्याय । प्रिय पूर्वाय ॥ अल्प-प्रथम-चरम-तय-अय-कतिपय-नेम-अर्ध एषु "नेमार्ध०" ॥ १ । ४ । १० ॥ इति वा जस इः अल्पे, अल्पा. इत्यादि । शेष नेम' सर्ववत् । अन्ये देववत् । तयायौ प्रत्ययौ एतदन्तयोर्ग्रहण सङ्ख्याया "अवयवात् तयट्" ॥ ७ । १ । १५१ ॥ एकतय-द्वितय-त्रितय-चतुष्टय-पञ्च-षट्-सप्त-अष्ट-नव-दश तयः ६ इत्यादि । एकतये, एकतया. । द्वितये, द्वितया. इत्यादि । एकतयी । द्वितयी । दशतयी इत्यादि ॥ "द्वित्रिभ्यामयट् वा" ॥७।१।१५२॥ द्वये, द्वयाः । त्रये, त्रयाः । उभये, उभयाः । कातन्त्रे द्वयेषामिति स्यात् । व्याकरणे तु न । अत्रार्धशब्दः पुल्लिङ्गोऽसमभागे वर्तमानो ग्राह्य. समभागे तु क्लीब. अर्धमित्येव । स्वार्थिकप्रत्ययान्ताग्रहणादिह न स्यात् अर्धकाः । द्वितीयतृतीयशब्दौ पुंसि देववत् पर "तीयं ङित्कार्ये वा" ॥ १ । ४ । १४ ॥ इति ङित्कार्ये वा सर्वादित्वम्–द्वितीयस्मै, द्वितीयाय । द्वितीयस्मात्, द्वितीयात् । द्वितीयस्मिन्, द्वितीये, तृतीयस्मै, तृतीयाय इत्यादि । स्त्रियां श्रद्धावत् । पर "तीय ङित्कार्ये वा" ॥ १ । ४ । १४ ॥ द्वितीयस्यै, द्वितीयायै इत्यादि ॥ एव तृतीयस्यै, तृतीयायै इत्यादि ॥ अन्यस्वार्थिकाग्रहणात् कपि स्मै-आद्या न स्यु. । द्वितीयकाय तृतीयकाय । द्वितीयकायै इत्यादि ॥ ३–२ ॥

इति सर्वादिगणतृतीयोल्लासस्यावचूर्णि. ॥ ३ ॥

---

**एकाद्याः सङ्ख्याशब्दाः स्युः, स्वस्वोक्तप्रक्रियास्पृशः ।**
**पुंस्त्रीलिङ्गाः फण-रथो-,मीढुष्यूरु-मुख्या मताः ॥ ५२ ॥**

एकद्विशब्दौ सर्वनामगणे उक्तौ । त्रिमुख्या उच्यन्ते–त्रिप्रभृत्यष्टादशान्ता बहुवचनाः पुंसि । त्रिशब्दः मुनिवत्–त्रयः । त्रीन् । इत्यादि । परमामि "त्रेस्त्रयः" ॥ १ । ४ । ३४ ॥ इति त्रयाणाम् ॥ स्त्रियाम्–"त्रिचतुरस्तिसृचतसृ स्यादौ" ॥ २ । १ । १ ॥ तिसृभाव. 'अस्वस्रादेः' इत्युक्ते ङीर्न "ऋतो र. स्वरेऽनि" ॥ २ । १ । २ ॥ तिस्रः २ । तिसृभिः । तिसृभ्य. २ । 'अनि' नकारस्य विषयादन्यत्र इति "ऋतो रः स्वरे०" ॥ २ । १ । २ ॥ इति न । ततो ह्रस्वाऽऽपश्च" ॥ १ । ४ । ३२ ॥ णत्व तिसृणाम् परत्वाच्च तिसृभावः । न त्रयादेश. । तिसृषु । आ० एवम् । क्लीबे–

त्रीणि २ । शेष पुंवत् ॥ प्रस्तावादन्यपदार्थेऽपिप्रियास्तिस्रो यस्य पुसः यस्या वा कुलस्य वा । तदा स्त्रियां त्रिचतुरोर्वर्त्तमानत्वात् तिसृचतसृौ भवत. "ऋदुशनस्०" ॥ १ । ४ । ८४ ॥ प्रियतिसा । "ऋतो रः स्वरेऽनि" ॥ २ । १ । २ ॥ प्रियतिस्रौ प्रियतिस्रः । प्रियति १८ स्रम् स्रौ स्रः । स्रा सृभ्याम् ३ सृभिः । स्रे सृभ्यः २ । स्रः २ स्रोः २ पूर्ववत् सृणाम् । स्रि सृषु । आमं० "ह्रस्वस्य गुण." ॥ १ । ४ । ४१ ॥ प्रियति ३ सः स्रौ स्रः ॥ स्त्रियामप्येवम् । क्लीबे- "नामिनो लुग् वा" ॥ १ । ४ । ६१ ॥ इति स्यमोरेकत्र लुक् । एकपक्षे लुप् । लुकि स्थानिवद्भावात् तिसृचतस्रादेशौ भवतः । लुपि तु न । प्रियतिसृ, प्रियत्रि । 'अनि' इति प्रियतिसृणी प्रियतिसृणि २ । टादौ स्वरे "वाऽन्यतः०" ॥ १ । ४ । ६२ ॥ इति वा पुस्त्वम् । प्रियतिस्रा, प्रियतिसृणा । प्रियति २१ सृभ्याम् ३ सृभिः । स्रे, सृणे सृभ्यः २ । स्रः, २ सृणः २ स्रोः, २ सृणोः २ पक्षद्वयेऽपि सृणाम् २ । स्रि, सृणि सृषु । आ० पूर्ववत् हे प्रियतिसृ, त्रि इत्यादि । यदा तु 'स्त्रिया' न वर्त्तते प्रियास्त्रयः पुरुषाः प्रियाणि त्रीणि कुलानि वा यस्य यस्याः कुलस्य वा इति विग्रहः तदा शुचिवत् । पुसि प्रियत्रिः प्रियत्री प्रियत्रयः । इत्यादि अग्निवत् । आमि आमः संबंधिविज्ञानात् त्रयादेशो न । प्रियत्रीणाम् ॥ स्त्रियाम् प्रियत्रिः प्रियत्री प्रियत्रयः । प्रियत्रिम् प्रियत्री प्रियत्रीः । प्रियत्र्या प्रियत्रिभ्याम् प्रियत्रिभि. । नायं शब्दः स्त्रीवृत्तिः तेन "स्त्रिया ङितां वा०" ॥ १ । ४ । २८ ॥ इति दै-आद्या न । प्रियत्रये । इत्यादि पूर्ववत् । क्लीबे- प्रियत्रि प्रियत्रिणी प्रियत्रीणि २ । टादौ स्वरे वा पुस्त्वम् । पक्षद्वयेऽपि प्रियत्रिणा प्रियत्रिभ्याम् ३ प्रियत्रिभिः । प्रियत्रिणे, प्रियत्रये । प्रियत्रिण. २, प्रियत्रेः २ प्रियत्रिणोः, २ प्रियत्र्योः २ । पक्षद्वयेऽपि प्रियत्रीणाम् । प्रियत्रिणि, प्रियत्रौ प्रियत्रिषु ।

चतुर्-"वाः शेषे" ॥ १ । ४ । ८२ ॥ चत्वार. । चतुरः । चतुर्भिः । चतुर्भ्यः २ । "सङ्ख्यानां र्णाम्" ॥ १ । ४ । ३३ ॥ चतुर्णाम् । चतुर्षु ॥ स्त्रियाम्-"त्रिचतुर०" ॥ २ । १ । १ ॥ चतसृभावः पूर्ववत् ङीर्न "ऋतो रः०" ॥ २ । १ । २ ॥ चतस्रः २ । चतसृभिः । चतसृभ्यः २ । पूर्ववत् चतसृणाम् । चतसृषु ॥ क्लीबे-"वा. शेषे" ॥१।४।८२॥ चत्वारि २ । अन्यपदार्थे प्रियतिसृवत् । प्रियचतसा प्रियचतस्रौ प्रियचतस्रः इत्यादि । आ० हे प्रियचतसः इत्यादि । स्त्रियामेवम् । क्लीबे-"अनतो लुप्" ॥ १ । ४ । ५९ ॥ इति स्यमोर्लुपि चतस्रादेशो न प्रियचतु. । चतुरशब्दस्यापि लुग्विकल्पमिच्छन्त्यन्ये । प्रियचतसृ, प्रियचतुः कुलम् प्रियचतसृणी प्रियचतसृणि २ । टादौ स्वरे वा पुंस्त्व प्रियचतस्रा, प्रियचतसृणा इत्यादि । यदा चतुर स्त्रियां न वर्त्तते । प्रियाश्चत्वारः पुरुषा' । प्रियाणि चत्वारि कुलानि यस्य यस्या वा कुलस्य वेति विग्रहस्तदा न चतसृभावः "वा. शेषे" ॥ १ । ४ । ८२ ॥ प्रियचत्वा. प्रियचत्वारौ ५ । प्रियचतुरः । प्रियचतुरा प्रियचतुर्भ्याम् इत्यादि । तत्सबंधिविज्ञानाद् इह नाम् न-प्रियचतुराम् । प्रियचतुर्षु । आ० "उतोऽनडुच्चतुरो वः" ॥ १ । ४ । ८१ ॥ हे प्रियचत्वः !, हे प्रियचत्वारौ !, हे प्रियचत्वारः !, । स्त्रियामेवम् । क्लीबे-प्रियचतु., प्रियचतुरी, प्रियचत्वारि २ । शेषं पुवत् ।

पञ्चन्-"डतिष्ण. सङ्ख्याया लुप्" ॥ १ । ४ । ५४ ॥ "नाम्नो नोऽनह्न." ॥ २ । १ । ९१ ॥ पञ्च २ । पञ्चभि. । पञ्चभ्य. २ । "सङ्ख्यानां र्णाम्" ॥ १ । ४ । ३३ ॥ "दीर्घो नाम्य०" ॥ १ । ४ । ४७ ॥ पञ्चानाम् । पञ्चसु ॥ प्रियाः पञ्चाऽस्येति बहुव्रीहौ प्रियपञ्चन् राजन्वत् । प्रियपञ्चा प्रियपञ्चानौ प्रियपञ्चानः । तत्संबंधिविज्ञानादिह जस्शसोर्लुप् न स्यात् । प्रियपञ्चानम् प्रियपञ्ञः । प्रियपञ्ञा इत्यादि । तत्सबंधिविज्ञानाद् इह नाम् न । प्रियपञ्ञाम् । प्रियपञ्चनि, प्रियपञ्ञि ॥ स्त्रियाम्-"अनो वा" ॥ २ । ४ । ११ ॥ "ताभ्यां वाऽऽप् डित्" ॥ २ । ४ । १५ ॥ सूत्रयोर्ङीडाप्विकल्पाभ्या त्रैरूप्य प्रियपञ्ञी, प्रियपञ्चा, प्रियपञ्चन्, क्रमान्नदीश्रद्धाराजन्वत् । स्त्रियामपि पुंवत् । क्लीबे दामन्वत् ।

षष्-"डतिष्णः सङ्ख्याया लुप्" ॥ १ । ४ । ५४ ॥ "धुटस्तृतीय·" ॥ २ । १ । ७६ ॥ "विरामे वा" ॥ १ । ३ । ५१ ॥ षट्, षड् २ । षड्भिः । षड्भ्य· २ । "सङ्ख्यानां र्णाम्" ॥ १ । ४ । ३३ ॥ धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ ष् ड् "तवर्गस्य श्च०" ॥ १ । ३ । ६० ॥ "प्रत्यये च" ॥ १ । ३ । २ ॥ षण्णाम् । षट्सु, षट्सु ॥ अन्यपदार्थे प्रियाः षड् अस्येति बहुव्रीहौ "धुटस्तृतीयः" ॥ २ । १ । ७६ ॥ प्रियषट्, ड् । प्रियषषौ-स्वरे सन्धिः । आमि तत्सबधिविज्ञानात् नाम् न । प्रियषषाम् । स्त्रियामेवम् । क्लीबे-प्रियषट्-ड्, प्रियषषी, प्रियषषि २ ।

सप्तन् पञ्चन्वत् ।

अष्टन्-"वाऽष्टन आः स्यादौ" ॥ १ । ४ । ५२ ॥ वा आत्व कृतात्वस्य "अष्ट और्जस्शसो." ॥ १ । ४ । ५३ ॥ अष्टौ २ । अष्टाभि. । अष्टाभ्यः २ । "सङ्ख्याना र्णाम्" ॥ १ । ४ । ३३ ॥ अत्र बहुवचन व्याप्त्यर्थम् तेन भूतपूर्वनन्ताया अपि नाम् । अष्टानाम् अष्टासु । आ० एवम् ॥ अनात्वपक्षे पञ्चन्वत् । अष्ट २ । अष्टभिः । अष्टभ्य. २ । अष्टानाम् । अष्टसु । आ० "डतिष्ण.०" ॥ १ । ४ । ५४ ॥ ततो "नाऽऽमन्त्र्ये" ॥ २ । १ । ९२ ॥ इति नलुग् न हे अष्टन् ।

अन्यपदार्थे प्रिया अष्टौ यस्य [illegible] वा पुंसि । पक्षे पूर्ववत् । आत्वे विसर्गः प्रियाष्टाः प्रियाष्टौ "अष्ट औजसशसोः" ॥१।४।५३॥ अत्र [illegible] न । प्रियाष्टा । प्रियाष्टाम् प्रियाष्टौ "लुगातोऽनापः" ॥२।१।१०७॥ प्रियाष्टः । [illegible] प्रियाष्टभ्याम् प्रियाष्टभिः । प्रियाष्टे । प्रियाष्ट २ । प्रियाष्टो २ । तत्सन्नधिविज्ञानात् नाम् न । प्रियाष्टाम । [illegible] ॥ अनात्वपक्षे प्रियाष्टन् प्रियपञ्चन्वत् । प्रियाष्टानौ प्रियाष्टानः ५ । प्रियाष्ण इत्यादि । आ० हे प्रियाष्टन् ॥ [illegible] महाराजन्वत् । पर प्रियाष्टन्रूपे आत्वानात्वे द्विधाऽपि पुंवत् । क्लीबे समोर्लुक् लुप्तत्वात् आत्व न । [illegible] स्वराघोः ॥१।४।६५॥ प्रियाष्टानि २ । आ० "क्लीबे वा" ॥२।१।९३॥ हे प्रियाष्ट, हे प्रियाष्टन् इत्यादि । अनान्ते प्रियाष्ट प्रियाष्टनी, प्रिय [illegible] प्रियाष्टानि २ । आ० हे प्रियाष्ट, हे प्रियाष्टन् इत्यादि ।

नवन् दशन् ॥ एकेनाधिका दश, एकश्च दश च वा द्वन्द्वे "एकादश षोडश०" ॥३।२।९१॥ इति एकादशन् । द्वाभ्यामधिका दश, द्वौ च दश च वा । त्रिभिरधिका दश इत्यादि "द्विन्यष्टाना द्वात्रयोऽष्टा ०" ॥३।२।९२॥ इति द्वादशन् । त्रयोदशन् । एव चतुर्दशन्-पञ्चदशन् । "एकादश षोडश०" ॥ ३ । २ । ९१ ॥ षोडशन्-सप्तदशन् । "द्विन्यष्टाना द्वात्रयोऽष्टा ०" ॥ ३ । २ । ९२ ॥ अष्टादशन् ॥ नवन्-आद्या अष्टादशान्ता पञ्चन्वत् ॥ एकेन न विंशति-रिति "नविंशत्यादिनैकोऽन्त्यान्" ॥ ३ । १ । ६९ ॥ 'तृतीयस्य पञ्चमे' ॥ १ । ३ । १ ॥ एकान्नविंशति, एकादूनविंशति । अथवा एकेनोना विंशति एकोनाविंशति ह्रस्वत्वे एकोनविंशति । अथवा एकेनोना एकोना २ चासौ विंशति समास. ।

विंशति. । एकोनविंशति आद्या नवनवत्यन्ता स्त्रीलिङ्गा. । आविष्टलिङ्गा एकवचनान्ता एव । लिङ्गान्तरयुक्तेष्वपि बहुसङ्ख्येष्वपि विंशत्यादिषु भूमिशब्दवत् प्रयोग । विंशतिः पुरुषा स्त्रिय. कुलानि वा सन्ति । विंशति पुरुषान् स्त्री कुलानि वा पश्य । विंशत्या पुरुषैः स्त्रीभि कुलैर्वा कृतम् । "स्त्रिया ङिता वा०" ॥ १ । ४ । २८ ॥ विंशत्यै, विंशतये पुरुषेभ्यः स्त्रीभ्य. कुलेभ्यो देहि । यदा तु विंशत्यादीनामेव गणन तदा सर्ववचनानि । विंशतिरेका । द्वे विंशती । तिस्रो विंशतय इत्यादि ॥ एकेनाधिका विंशति. एकविंशति । "द्विन्यष्टानाम्०" ॥ ३ । २ । ९२ ॥ द्वाविंशति. । त्रयोविंशति । एवमग्रेऽपि चतुःपञ्च-षड्-सप्त-विंशति । अष्टा ति. । एकान्न-एकादून एकोन-एकोनात्रिंशत् ४ । त्रिंशत् । एकत्रिंशत्-द्वात्रिंशत्-त्रयस्त्रिंशत् इत्यादि ॥ अष्टात्रिंशत् । एकान्न-एकादून-एकोन-एकोना-चत्वारिंशत् ४ । चत्वारिंशत् । एकचत्वा-रिंशत् । "चत्वारिंशदादौ वा" ॥ ३ । २ । ९३ ॥ द्वाचत्वारिंशत्, द्विचत्वारिंशत् ॥ त्रयश्चत्वारिंशत्, त्रिचत्वारिंशत् ॥ चतुश्चत्वारिंशत् इत्यादि ॥ अष्टाचत्वा शत्, अष्टचत्वारिंशत् ॥ एकान्नपञ्चाशत् ४ । पञ्चाशत्—एकपञ्चाशत् पूर्ववत् । द्वापञ्चाशत, द्विपञ्चाशत् ॥ त्रिपञ्चाशत्, त्रय.पञ्चाशत् । इत्यादि ॥ अष्टपञ्चाशत्, अष्टापञ्चाशत् ॥ एकान्नषष्टिः ४ । षष्टिः ॥ एकषष्टि । द्वाषष्टि, द्विषष्टि. । त्रय.षष्टि, त्रिषष्टिः इत्यादि ॥ अष्टषष्टि., अष्टाषष्टि. ॥ एकान्नसप्ततिः ४ । सप्ततिः । एकसप्तति. । द्विसप्तति., द्वासप्तति । त्रिसप्ततिः, त्रय.सप्तति. । अष्टसप्ततिः, अष्टासप्ततिः । एकान्न-एकादून-एकोन एकोना-अशीति. ४ । अशीति । एकाशीति. । अशीतिवर्जनाद् द्व्यशीतिः । त्र्यशीतिः । "नाम्नो नोऽनह्नः" ॥ २ । १। ९१ ॥ दीर्घश्च अष्टाशीति । एकान्ननवति. ४ । नवतिः । एकनवतिः । द्विनवतिः, द्वानवतिः । त्रयोनवतिः, त्रिनवतिः । "पदान्ताट्ट-वर्गादनाम्नगरीनवते" ॥ १ । ३ । ६३ ॥ अत्र नवतिवर्जनात् "तवर्गस्य श्च०" ॥ १ । ३ । ६० ॥ "तृतीयस्य पञ्चमे" ॥ १ । ३ । १ ॥ षण्णवति. । अष्टनवति., अष्टानवतिः । नवनवतिः । इत्येते स्त्रीलिङ्गाः ॥ शतं सहस्रमयुत प्रयुत पुंक्लीबलिङ्ग. । लक्ष. पुंस्त्री । कोटि स्त्री । अभीषामेव गणने सर्ववचनानि । शतमेकम् । शते द्वे । शतानि त्रीणि इत्यादि । कोटिरेका । कोटी द्वे इत्यादि ॥ एकेनाधिक शत एकशतम् । प्राग् शतादिति ग्रहणात् 'द्विन्यष्टानाम्०" ॥ ३ । २ । ९२ ॥ इति न । द्वि त्रि-शतम् । चतु पञ्च-शत इत्यादि । दशशतं सहस्रम् । तथा एकसहस्रम् । द्वि-त्रि-सहस्र इत्यादि ॥ एक एव "एकादाकिन् चासहाये" ॥ ७ । ३ । २७ ॥ एकाकिन् [illegible] । एकाकी एकाकिनी एकाकि पुमान् स्त्री कुल च ॥

अथ सङ्ख्यापूरणप्रत्ययान्ता वाच्यलिङ्गाः— द्वयोः पूरणः "द्वेस्तीयः" ॥ ७ । १ । १६५ ॥ द्वितीयः द्वितीया द्वितीयम् । एव सर्वत्र वाक्य "त्रेस्तृ च" ॥ ७ । १ । १६६ ॥ तृतीयः । "चतुरः" ॥ ७ । १ । १६३ ॥ इति थट् चतुर्थ, पुन. "येयौ चलुक् च" ॥ ७ । १ । १६४ ॥ तुर्यः, तुरीयः । सङ्ख्या "नो मट्" ॥ ७ । १ । १५९ ॥ पञ्चम । "षट्कतिकतिपयात् थट्" ॥ ७ । १ । १६२ ॥ षष्ठः । "नो मट्" ॥ ७ । १ । १५९ ॥ सप्तमः । इत्यादि । दशम । एकादशाना पूरण. "सङ्ख्यापूरणे डट्" ॥ ७ । १ । १५५ ॥ एकादश. इत्यादि । अष्टाद ३ शः शी शम् ॥ एकोनविंशते पूरणः "विंशत्यादेर्वा तमट्" ॥ ७ । १ । १५६ ॥ एकोनविंशतित ३ मः मी मम् । पक्षे "सङ्ख्यापूरणे डट्" ॥ ७ । १ । १५५ ॥ "विंशतितेस्तेर्डिति" ॥ ७ । ४ । ६७ ॥ "डित्यन्त्यस्वरादेः" ॥ २ । १ । ११४ ॥ एकोनविं २ श शी । एव विंशतितम. । पक्षे विंशः विंशी विंशम् । एव एकविंशतितमः, एकविंशः । द्वि-द्वा वि २ शतितमः, शः इत्यादि

त्रिंशत्तमः, त्रिंशः । एकत्रिंशत्तम', शः इत्यादि । चत्वारिंशत्तमः, शः इत्यादि । पञ्चाशत्तमः, पञ्चाशः इत्यादि । "षष्ट्या-देरसङ्ख्यादे." ॥ ७ । १ । १५८ ॥ नित्यं तमट् षष्टितमः । सङ्ख्यापरात् तु वा एकषष्टितमः, एकषष्टः । इत्यादि पूर्ववत् ॥ सप्ततितमः । एकसप्ततितम', एकसप्तः इत्यादि पूर्ववत् ॥ अशीतितमः । एकाशीतितमः, तः इत्यादि पूर्ववत् ॥ नवतितमः ॥ एकनवतितम', तः इत्यादि ॥ "शतादिमासार्द्धमाससंवत्सरात्" ॥ ७ । १ । १५७ ॥ इति अग्रे सर्वत्र नित्यं तमट् शततमः । शततमी । शततमम् । एकशततमः इत्यादि । सहस्रतमः । लक्षतमः । कोटितम इत्याद्या ज्ञेयाः । पुंस्त्रीक्लीबवाच्यलिङ्गाः प्रपञ्चिताः ॥ शेषलिङ्गप्रकारशब्दा लिख्यन्ते—फणः । फणा ॥ रथः । रथी ॥ अयमूर्मिः । [ इयमूर्मिः ] अयमिषुधिः । इयमिषुधि' ॥ अय इय ऊरुः ॥ मुखशब्दात् कक्ष-गञ्जनाभि भ्रम-ताराऽऽद्या पुंस्त्रीलिङ्गाः ॥ ४–१ ॥

**पुंनपुंसकलिङ्गास्तु, व्यलीक-पुस्तकाऽऽदयः ।**
**स्त्रीक्लीबलिङ्गा नासीर,-मृगव्य-नगराऽऽदयः ॥ ५३ ॥**

व्यलीकः । व्यलीकम् ॥ पुस्तकः । पुस्तकम् ॥ आदेः वल्मीक-पुलक-फरक लत्वे फलक-किञ्जल्क-स्तवक-तिलकाऽऽद्याः ॥ नासीरा । नासीरम ॥ मृगव्या । मृगव्यम् ॥ नगरी । नगरम् ॥ आदेः मन्दिरा । मन्दिरम् ॥

'ग्रीष्मे क्षुत्क्षामकुक्षिव्रजति पथि मनाक् मन्दिरातप्तवारि. ।'

कादम्बरी । कादम्बरम् मद्यम् । स्थाली । स्थालम् ॥ पित्तलम् । पित्तला । आद्याः ॥ ४–२ ॥

**स्वतस्त्रिलिङ्गाः कंदल,-मृणाल-शकटादयः ।**
**अलिङ्गका युष्मदस्मद्,-ष्णान्ता सङ्ख्या डतिस्तथा ॥ ५४ ॥**

कन्दलः ली लम् उपरागाऽऽदि । एवं मठ-कुण्ड-विषाण तूण-कन्दर-मुख्याः ॥ षष् पञ्चन्-मुख्याः ॥ किं प्रमाण-मेषामिति "यत्तत्किमः सङ्ख्याया डतिर्वा" ॥ ७ । १ । १५० ॥ या सङ्ख्या मानमेषा यति । पक्षे "यत्तदेतदो डावादिः" ॥ ७ । १ । १४९ ॥ यावन्तः । सा सङ्ख्या मानमेषां तति तावन्तः । का सङ्ख्या मानमेषा कति । पक्षे "इद किमोऽतुरिय् किय चास्य" ॥ ७ । १ । १४८ ॥ कियन्तः । डति. स्वभावाद् बहुवचनविषय' । "डतिष्णः सङ्ख्याया लुप्" ॥ १ । ४ । ५४ ॥ यति २ । यतिभिः । यतिभ्यः २ । यतीनाम् । यतिषु । एव तति कति ॥ ४–३ ॥

स्व प्रभृत्यव्ययमलिङ्गमसङ्ख्य च "अव्ययस्य" ॥ ३ । २ । ७ ॥ इति सर्वविभक्तिलोपः ।

अथ द्विवचनान्ताः पुंसि-नासत्य-दस्-पुष्पदन्त-पुष्पवन्त जपति-दपति-पुनर्वसु मुख्या'–नासत्यौ । दस्रौ । जपती । दंपती । पुनर्वसू इति ॥ द्यौश्च भूमिश्च "दिवो द्यावा" ॥ ३ । २ । ४४ ॥ द्यावाभूमी ॥ रुदन्त्यनयो. "अस्" (उणा-९५२) इत्यस् गौरादित्वात् ङीः रोदसी स्त्री । रोदस् क्लीव. । इदन्तो वा रोदसिशब्द. । त्रयोऽपि द्विवचनविषया. । रोदसीत्यव्ययमपि ॥

बहुवचनान्ताः–दार-प्राण-असुसप्तर्षि-चित्रशिखण्डिन् मुख्या. । केतु [ शब्द ] पुंसि ग्रहवाची बहुवचनः । पताकावाची तु सर्ववचनः ॥ स्त्रियां बहुवचनान्ताः–अप्-वर्षा-मघा-कृत्तिका बहुला । तथा च लि ानुशासने–

अहपूर्विकाऽऽदिर्वर्षा ,मघाऽप् कृत्तिका बहौ ।
वा तु जलौकाऽप्सरस , सिकता सुमनः समा' [ स्त्री० ९ ]

वसुशब्दस्य देववाचकस्य पुंसि बहुत्वम् । देवप्रभेदा वसव. । रत्नाद्यर्थ. सर्ववचन. । वस्त्रसचविदशावाची दशाशब्दः । लाजशब्दश्च स्त्रीपुंसलिङ्गः । तौ च बहुत्वे एव प्रयोक्तव्यौ इति ।

पण्डितामरचन्द्राऽऽख्य, कृतशब्दानुसारत' ।
अय शब्दगणोऽलेखि, श्रीजयानन्दसूरिभि' ॥ १ ॥
देवरत्नाऽऽख्यशिष्यस्य, पठनाय प्रयत्नत. ।
स शोध्यो धीधनै सम्यक् शब्दशास्त्रविशारदै. ॥ २ ॥

। इति स्यादिशब्ददीपिका सपूर्णा ।

आनन्देन्दुप्रभावेण, लालचन्द्रानुयोगिना ।
प्रसिद्धा द्वितीयावृत्तिश्छबीलदासशोभिता ॥ १ ॥

